स
दा
शि
व
म्

# सदाशिवम्

## संस्कृतशास्त्राणाम् अन्ताराष्ट्रियशोधपत्रिका

(षाण्मासिकी ई-शोधपत्रिका)




ISSUE – Jul-Dec 2022 | Vol. 8 |
ISSN 2582-1326

# SADASHIVAM

## INTERNATIONAL RESEARCH JOURNAL OF SANSKRIT SHASTRAS

(Half-yearly e-Research Journal)





PUBLISHED BY:
CENTRAL SANSKRIT UNIVERSITY
(Under Ministry of Education, Govt. of India)
SHREE SADASHIVA CAMPUS
PURI, ODISHA







# सम्पादकीयम्

## वरनिर्वाचनम्

**कन्या विवाहयोग्या जाता चेत् , पितरः अभिभावकाश्च वरनिर्वाचने तत्पराः भवन्ति । वरः यावान् सुन्दरः सुशीलो वा भवतु, तस्य यावती वा शिष्टवंशपरम्परा स्यान्नाम,यदि सः निरुद्योगी, अव्यापारी, शीघ्रातिशीघ्रं धनाढ्यो भवितुम् अक्षमः, तर्हि सः अयोग्यः असमर्थश्च ....**

वंशस्य प्राचीन–पारम्परिकवस्तूनां विक्रयणं भवतु नाम उद्योगिवरः अपेक्षितः। साम्प्रतम् एतादृशो विचारः अभिभावकानाम् अन्तः दृढम् अस्ति। तत्रापि सर्वकारोद्योगी चेत् अत्युत्तमम्। तत्र अन्यगुणादिकं किमपि नापेक्षितम् । सः मद्यपो भवतु अशिष्टो वा , तस्य गृहं शैक्षिकयोग्यता , समृद्धवंशपरम्परा अस्तु न वा। यदि कुत्रचित् सर्वकारीयकार्यालये क्षुद्रातिक्षुद्रम् उद्योगं कुर्वन्नस्ति समीचीनम् , अथवा कुत्रचित् सम्मर्दस्थाने मद्यापणं द्रुतखाद्यकेन्द्रम् (Fast Food Centre) उद्घाटितवान् अस्ति, तर्हि इतोऽपि समीचीनम्। तत्रैव अन्वेषणकथा समाप्ता। येन केन प्रकारेण तत्रैव कन्यायाः विवाहः स्थिरः अभवत्। यः स्वस्य, स्वमातृपितृभगिन्यादिनाम् उदरपोषणे असमर्थः , सः कथं पुनः विवाहरूपभारं वोढुं वा समर्थो भवेत् ?

अपि च साम्प्रतं कन्यापितरः स्वपुत्रीः रक्षणशीलत्वेन अशिक्षिताः स्थापयितुं नेच्छन्ति। अतः ते ताभ्यः न केवलं सामान्यशिक्षां यच्छन्ति, अपितु वैद्यकीय–यान्त्रिक–प्रविध्यादिक्षेत्रेषु भूरिधनं व्ययीकृत्य उच्चशिक्षामपि दापयन्ति। कदाचित् सा उद्योगं प्राप्नोति चेत् विवाहानन्तरं सा पत्यधीना न भवेत्।

एतावत्तु तेषाम् अभिभावकानां मूलभावना। अथापि कन्यायाः उच्चशिक्षाप्राप्त्यनन्तरं तस्यै तदुर्ध्वयोग्यतासम्पन्नवरपात्रम् अन्विषन्ति। कन्या यदि सर्वकारीयम् असर्वकारीयम्–उद्योगं वा कुर्वती अस्ति तर्हि अभिभावकानां पुच्छस्पर्शः कर्तुं न शक्यते। अर्थात् सर्वोच्चमूल्यवान् नामवान् च वरः कथं स्वकन्यायै प्राप्येत तथा प्रयत्नः तैः विधीयते, किन्तु सामान्यवरः नेष्यते। ग्रामीण–कृषकादारभ्य नगरस्थ–लघुव्यवसायिनं यावत् सर्वे स्वकन्यायै उद्योगिनं वरमेव अभिलषन्ति।

ये अभिभावकाः स्वकन्यायै उद्योगिनं महाव्यवसायिनं वा युवकं वरत्वेन निर्वाचयन्ति तत् अधिककालं न सुखकरं भवति । तेषाम् एतादृशस्य तुलनात्मकवरनिर्वाचनस्य कृते स्वल्पकालाभ्यन्तरे ते कुपरिणामम् अनुभवन्ति। धनाढ्ययुवकेभ्यः स्थूलाङ्कधनयौतुकेन कन्यायाः विवाहं कारयित्वा कष्टे निपातयन्ति, किन्तु उत्तमस्वभावसम्पन्नेन निरुद्योगिना युवकेन सह विवाहं कारयितुं नेच्छन्ति। अत्र विवाहयोग्यवयसि प्राप्तवतीनां युवतीनामपि महती भूमिका वर्तते। अर्थात् ताभिः उच्चशिक्षारूपः अहङ्कारः परित्याज्यः , तस्याः उच्चशिक्षायाः नैतिकोपयोगः करणीयः। ताः यदि ततोऽपि न्यूनशिक्षितेन समशिक्षितेन वा युवकेन सह विवाहं कर्तुं सिद्धाः भवेयुः तर्हि लोके एकस्य स्वस्थसमाजस्य वातावरणं निर्मितं भवेत् । किन्तु आन्तरिकतया ताः साम्प्रतिक–बाह्यिक–आडम्बरयुक्त–तुलनात्मक–सुखजीवनधारणार्थं निरन्तरं यतन्ते। एतेन सरलयुवकानां मनः अनुदिनं शनैः शनैः नीरसं भवति । एवं चेत् अवश्यं समाजे तादृशः क्रान्तिकालः समागच्छेत् यत्र एतादृशाः अवहेलिताः युवकाः प्रतिक्रियासम्पन्नाः सन्तः सामाजिकविशृङ्खलां घटयेयुः। तेन अस्माकं सुखमयजीवनम् अवश्यं कलुषितं भवेत्। अतः इदानीमेव जागरुकैः भाव्यम्।

स्थानम् – पुरी

दिनाङ्कः – ३१.१२.२०२२

– रमाकान्तमिश्रः

सम्पादकः






# आध्यात्मिकबुद्धेः सम्प्रत्ययः

## (Concept of Spiritual Intelligence)



**डॉ. गणेश ति. पण्डितः**
सहाचार्यः उपनिदेशकश्च
केन्द्रीयसंस्कृतविश्वविद्यालयः, देहली
दूरवाणीसङ्ख्या – 9449103568
ई-मेल - pub@csu.co.in

## शोधसारांशः

आध्यात्मिकज्ञानं दर्शनं वा गभीरं सूक्ष्मं च तत्त्वम् अस्ति। एतदवाप्तये उपक्रियमाणा बुद्धिरेव आध्यात्मिकबुद्धिः इति व्यपदिश्यते। आध्यात्मिकबुद्धियुक्तः मानवः कुशलमार्गदर्शकः, धर्मोपदेशकः, जनानुरागी च सम्भवतीति मनोवैज्ञानिकानां मतम्।

तत्र हि बुद्धिं वंशः वातावरणं च प्रभावयतितमाम्। यदि पिता कुशाग्रबुद्धिः तर्हि पुत्रोऽपि बुद्धिमान् भवितुमर्हति।सहसम्बन्धविधिना अपि विज्ञायते यत् बौद्धिकक्षमतानां सङ्क्रान्तिः (Inheritance of Intelligence) सञ्जायते इति। मनोविदः सहसम्बन्धविधिना सह परिवारेतिहासविधेः यमलैकनियन्त्रणविधेः बालाध्ययनविधेश्च साहाय्येन बुद्धिलब्धिं गणयन्ति। परन्तु केवलं वंशस्य आधारेण बुद्धिं मापयितुम् आकलयितुं च न शक्यते। यतोऽहि वातावरणम् अपि बहुधा बुद्धिं प्रभावयति। अतः वंशवातावरणयोरुभयोः प्रभावः अभ्युपगन्तव्यः इति स्पष्टम्। तत्र हि बुद्धेः स्थिरम् आकलनसूत्रं किमपि नास्ति। अतः बुद्धिलब्धिः अस्थिरा (Unstable) इत्येव विभाव्यते। परन्तु व्यक्तेः निर्दिष्टकार्यकरणचातुर्यं परीक्ष्य प्रत्येकस्मिन् अपि सन्दर्भे कार्यक्षेत्रेण वातावरणेन च तदीयसमायोजनसामर्थ्यमपि अवलोक्य च बुद्धिं मापयितुं शक्यते। अतः एषा एका क्रमबद्धा प्रक्रिया इति स्पष्टम्।

बुद्धेः वर्गीकरणं विभिन्नैः मनोविद्भिः विभिन्नरूपेण कृतम्। अधिगमसामर्थ्यजनन्याः बुद्धेः साहाय्येन समस्यानां समाधानं सुखेन कर्तुं शक्यते इति तेषां मतम्। सामान्यतः ज्ञानार्जनसाधनीभूतायाः बुद्धेः पञ्च प्रकाराः शिक्षामनोविज्ञानिभिः उपपादिताः सन्ति। यथा-

१. मूर्तबुद्धिः २. अमूर्तबुद्धिः ३. सामाजिकबुद्धिः
४. सांवेगिकबद्धिः ५. आध्यात्मिकबुद्धिः इति ते पञ्च।

आसु आध्यात्मिकबुद्धिविषये अद्यावधि अध्ययनम् अनुसन्धानं नाधिकमभूत् इत्यतः तदेवात्र विविच्यते।



**कुञ्चिकापदानि** – अध्यात्मिकबुद्धिः, मूर्तबुद्धिः, अमूर्तबुद्धिः, सामाजिकबुद्धिः, सांवेगिकबुद्धिः, बुद्धिलब्धिः, तत्त्ववित्, सात्त्विकी, बुद्धिः, राजसीबुद्धिः, तामसीबुद्धिः।

बुद्धेः पञ्चसु प्रकारेषु मूर्तबुद्धिः सर्वजनसाधारणी। अतः सा आदौ निरूप्यते।

### १. मूर्तबुद्धिः (Concrete Intelligence)

एषा व्यावहारिकबुद्धिः (Common Sense) इत्यपि निर्दिश्यते। दृग्गोचराणां पदार्थानाम् अभिज्ञाने अनुप्रयोगे च सहायिका बुद्धिरेव मूर्तबुद्धिरित्यभिधीयते। पदार्थानां पारस्परिकसम्बन्धावगमने तेषां सङ्घटने च इयं मूर्तबुद्धिः साहाय्यं विदधाति। इयं हि यस्मिन् बाले उद्बुद्धा अथवा प्रबला भवति सः हस्तकलाकुशलः प्रत्यक्षपदार्थवेत्ता च भविष्यति । हस्तचित्राभिनयकलासु अभियान्त्रिकविद्यासु च निपुणेषु इयं बुद्धिः विशेषतः सन्निहिता भवति। यान्त्रिकबुद्धिः (Mechanical Intelligence) इत्यपि नामान्तरम् अस्याः एव वर्तते।

### २. अमूर्तबुद्धिः (Abstract Intelligence)

आन्तरिकबुद्धिः इत्यपि नामान्तरम्। विचारैः भावनाभिः आत्मकेन्द्रिततत्वैः सञ्जुष्टा बुद्धिरेव अमूर्तबुद्धिः इति निगद्यते। काल्पनिकक्षमतायाः सर्जनात्मकक्षमतायाः मूलस्रोतः नाम इयमेव। अतः अमूर्तबुद्धियुक्तः मानवः कालान्तरे तत्त्ववित् दार्शनिकः वाक्कीलः कविः साहित्यिकः तार्किकः गणितज्ञः वा भवितुमर्हति।

### ३. सामाजिकबुद्धिः (Social Intelligence)

समाजेन सह समायोजने सामाजिकबुद्धिः साहाय्यं विदधाति। समाजेन सामाजिकसदस्यैः सह च यः मानवः द्रुतगत्या समायोजनं करिष्यति सः सामाजिकबुद्धियुक्तः इति उच्यते। सामाजिकबुद्धेः आधारः व्यवहारकौशलम् एव। सहयोगी, सहकारी, परोपकारशीलः उदारश्च कः भवति ? इत्युक्ते सामाजिकबुद्धियुक्तः एव नान्येति मनोवैज्ञानिकाः मन्वते।

### ४. सांवेगिकबुद्धिः (Emotional Intelligence)

सन्दर्भानुगुणं परिवेषानुगुणं च समुचितसांवेगिकाभिव्यक्तिं कर्तुं सांवेगिकनियन्त्रणं कर्तुं च अपेक्षिता बुद्धिः सांवेगिकबद्धिः इति कथ्यते। यथोक्तं गीतायाम् –

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते।।56।।**

इति भगवद्गीतायाः द्वितीये अध्याये अयं श्लोकः श्रूयते। सांवेगिकबद्धिप्रबलः समुचितमात्रेण परिस्थितिं चावलोक्य च प्रतिक्रियां ददाति।

सांवेगिकबद्धिः इति भेदं पाश्चात्येषु केचन एव अङ्गीकुर्वन्ति। तेषु गोलमेन (Goleman) इत्येषः प्रमुखः। प्रशासकेषु नायकेषु कलाकारेषु च एतादृशी बुद्धिः प्रबला भवति इति पाश्चात्यमनोवादिनां वादः।

### ५. आध्यात्मिकबुद्धिः (Spiritual Intelligence)

आध्यात्मिकबुद्धिः इत्येषः सम्प्रत्ययः पाश्चात्येषु नाधिकः चर्चितः वर्तते। अध्यात्मज्ञानार्जनसाधनीभूता बुद्धिः आध्यात्मिकबुद्धिः इति केचन अङ्गीकुर्वन्ति। आत्मनिष्ठेषु अपि विचारेषु वस्तुनिष्ठतां गवेषयितुं तर्कयितुं च या बुद्धिः सहायिका सैव आध्यात्मिकबुद्धिः इति वक्तुं शक्यते। किन्तु मोक्षादिकं पाश्चात्यमनोवैज्ञानिकाः न अङ्गीकुर्वन्ति इत्यतः आध्यात्मिकबुद्धेर्विषये तेषाम् आदरः अधिकोऽपि नास्ति। अतः एनं बुद्धिप्रकारम् आधारीकृत्य अत्यल्पानि शोधकार्याणि सञ्जातानि सन्ति। आध्यात्मिकबुद्धिम् अधिकृत्य भारतीयज्ञानप्रणाल्यनुगुणं च विश्लेषणं भारते अद्यावधि सुष्ठु न जातम् । अतः भारतीयैः शिक्षाशास्त्रिभिः अधुना भारतीयज्ञानपरम्परायाः प्रसारदृष्ट्या च आध्यात्मिकबुद्धेः अध्ययनमनुसन्धानं च विशेषतः विधेयमस्ति।



तत्त्वज्ञानार्थदर्शिनी बुद्धिः आध्यात्मिकबुद्धिः इति भारतीयवाङ्मयावलोकनेन विज्ञायते। संस्कृतवाङ्मये विस्तरेण संक्षेपतश्चापि आध्यात्मिकबुद्धेः विश्लेषणं विहितमिति दृश्यते। अतोऽधुना तद्दिशि अनुसन्धानकार्याणि सम्पादनीयानि सन्ति।

**सम्बन्धात्मकचिन्तनस्य स्रोतः एव बुद्धिः** इति केचन पाश्चात्याः कथयन्ति। स्पियरमैन् इत्येषः Intelligence is relational thinking इति सङ्ग्रहेण कथयति। **बोधः, आविष्कारः, निर्देशनम्, आलोचनम्** इत्येतेषु चतुर्षु शब्देषु सन्निहिता मूलतत्त्वस्वरूपा हि बुद्धिः इति बिनेवर्यः (Binet) निगदति। मानवोद्देश्यानां परिपूरणे तन्मार्गस्थसमस्यानां वारणे च मानवबुद्धिरेकैव सहायिका इति बहूनां राद्धान्तः। अतः बुद्धेर्विषये सर्वदा बहवः प्रश्नाः बहुषु बहुवारं उद्भवन्ति।तदनु बहवो हि बुद्धिं बहुधा परिभाषन्ते वर्गीकुर्वन्ति च। एतेषु बुद्धिप्रकारेषु आध्यात्मिकबुद्धिः शोधबुध्या अनुसन्धेया एव। अतः तत्सर्वं सविस्तरं निरूप्यते।

**आध्यात्मिकबुद्धेः परिकल्पना**

आध्यात्मिकबुद्धेः शब्दशः उल्लेखः विभागो वा भारतीयैः प्राक्कालिकैः शिक्षाविद्भिः नैव विहितः। परन्तु सात्त्विकराजसतामसभेदैः बुद्धेः यद्वर्गीकरणं भारतीयैः विहितमस्ति तत्र आधुनिकैः उक्तानि आध्यात्मिकबुद्धेः लक्षणानि कानिचन उपलभ्यन्ते। पाश्चात्यैः प्रयुज्यमानः आध्यात्मिकबुद्धिरिति शब्दः सङ्कीर्णार्थद्योतकश्चापि वर्तते। किञ्च पाश्चात्याः मोक्षमार्गं नेच्छन्ति न जानन्ति च। आत्मनः बुद्धिः (it is a soul's intelligence) आध्यात्मिकबुद्धिरिति गदन्तः वैदेशिकाः मनोवैज्ञानिकाः मानवः परिपूर्णः समन्वितश्च भवितुम् इयमपेक्ष्यते (A Complete Man) इति उदाहरन्ति। आध्यात्मिकबुद्धेः बलेन मानवः परेषां जीवनमार्गापेक्षया स्वीयं भव्यम् उत्कृष्टं च जीवनमार्गं लब्धुं प्रभवति इति ते अभिप्रयन्ति। बुद्धेः एकं रूपमेव आध्यात्मिकबुद्धिः इति एम्मन्स वर्यः वदति। भविष्योन्मुखी बुद्धिरेषा समस्यासमाधाने लक्ष्यप्राप्तौ च सहकारिणी वर्तते इति सः निगदति। अस्याः साहाय्येन अस्मास्वेव उद्भूतेभ्यः मूलभूतप्रश्नेभ्यः नवनवीनानि उत्तराणि अस्माभिरेव अवाप्तुं शक्यन्ते इति तन्मतम्। सामान्यतः मानवजीवनस्य मूलभूतप्रश्नाः नाम आध्यात्मिकप्रश्नाः एवेति आदिशङ्कराचार्याणां मतम्। यथोक्तं भजगोविन्दस्तोत्रकाव्ये -

**कस्त्वं कोऽहं कुत आयातः**

**का मे जननी को मे तातः ।**

**इति परिभावय सर्वमसारं**

**विश्वं त्यक्त्वा स्वप्नविचारम् ॥२३॥** इति

लौकिकविचारः नश्वरः आध्यात्मिकबुद्धिसम्पन्नश्च सेश्वरः इति भारतीयदार्शनिकः भावयति।

तत्र हि आध्यात्मिकबुद्धेः पञ्च घटकान्[i] निगदन्ति पाश्चात्याः। ते च यथा -

1. समस्यासमाधानार्थम् आध्यात्मिकसामग्रीणाम् प्रयोगक्षमता।

2. चेतनायाः समुन्नतदशाप्राप्तिः तत्क्षमताभिवृद्धिश्च।

3. नित्यानुभवानाम् अनुप्रयोगसामर्थ्यम्।

4. भौतिकजीवनेन प्रापञ्चिकपदार्थैश्च आत्मोन्नयनसामर्थ्यम्।

5. सदाचारीभवनम्।

एतेषु पञ्चसु घटकेषु एम्मन्स महोदयः पञ्चमं कालान्तरे (सदाचारीभवनम्) परित्यज्य चतुरः एव घटकान् आध्यात्मिकबुद्धेः घटकत्वेन निरदिशत्। अयमेकः विचित्रः निर्धारः तस्य। सदाचरणसम्पन्नतां विना आध्यात्मिकबुद्धेः अस्तित्वं प्रभावं स्वरूपं च कथं वा निरूपयितुं शक्यते इति तु चिन्त्यमेव। आध्यात्मिकता



अस्माकं जीवनस्य एकमपरिहार्यमङ्गम् इति परिभाव्य यदा मानवः जीवितुम् आरभते तदा आध्यात्मिकबुद्धिः उद्बुद्धा भवतीति लेविन[ii] वर्यः वदति।

मानवजीवनं किमर्थम्? इत्येनं प्रश्नं कर्तुं अपेक्षितां मानवीयक्षमतां या उत्तेजयति; किञ्च अस्माकं पारस्परिकसम्बन्धोऽपि वर्तते, पुनः लोकेन सह अस्माकं सहजसम्बन्धश्चास्ति इति भावनां या उत्पादयति सैव आध्यात्मिकबुद्धिरिति वोल्मन[iii] वर्यः वदति।

आत्ममनोभ्यां युक्तेन आन्तरिकजीवनेन सह लोकजीवनेन सम्बद्धा बुद्धिः आध्यात्मिकबुद्धिः इति वान[iv] महोदयः अभिप्रैति।

आध्यात्मिकबुद्धिं परिभाषामाणौ ज़हर तथा मार्शल[v] (2004) इत्येतौ कथयतः यत् 'अस्माकं अन्तर्निहितं गूढार्थम्, उद्देश्यम्, उच्चाकाङ्क्षाः च विज्ञातुं या बुद्धिः सहायिका सैव आध्यात्मिकबुद्धिः' इति।

आध्यात्मिकबुद्धिलब्धेः द्वादश गुणान् एतौ उल्लिखतः। ते च यथा -

१. आत्मजागर्या

२. सहजता

३. दूरदर्शिता

४. समग्रता

५. कारुणिकता

६. वैविध्योत्सुकता

७. क्षेत्रस्वतन्त्रता - क्षेत्रज्ञता

८. विनम्रता

९. किमर्थम्? इत्येवं मौलिकप्रश्नकरणक्षमता

१०. पुनर्व्याख्याक्षमता

११. प्रतिकूलपरिस्थितेः स्वानुकूलकरणक्षमता

१२. चतुरता - ग्रहणपटुत्वम् इति।

अम्राम महोदयस्तु दैनिककार्यसम्पादनाय गुणसंवर्धनाय च आध्यात्मिकसंसाधनानाम् अर्जनार्थम् अनुप्रयोगार्थं च सहकारिणी बुद्धिरेव आध्यात्मिकबुद्धिः इति अवदत्। अस्याः सप्त विशेषताः अपि तेनैव उक्ताः सन्ति। ते च यथा –

१. चैतन्यम् - इदं हि विकसितम् - परिष्कृतम् - जागरूकम् - आत्मज्ञानसमन्वितं च भवति।

२. अनुग्रहः - जीवनं प्रेमपूर्णं विश्वासपूर्णं च वर्तते इति मत्वा तदनु जीवनयापनम्।

३. अर्थः - सोद्देश्यसेवाभावाभ्यां युक्तस्य दैनिककार्यस्य कृते प्राथमिकतां प्रदाय तत्रत्यानां समस्यानां पीडानामपि सम्मुखीकरणार्थं सिद्धता।

४. अतिक्रमणम् - आत्मनिष्ठाहङ्कारदशाम् अतिक्रम्य सर्वजनसम्बन्धयुक्तपूर्णदशां प्रति (ऊर्ध्वदिशि) गमनम्।

५. सत्यम् - मुक्तमनसा सृष्टेः स्वीकृतिः तद्विषये जिज्ञासा अनुरागश्च।

६. शान्त्या आत्मसमर्पणम् - सत्यं प्रति - ईश्वरं प्रति - पूर्णतां प्रति - निजप्रकृतिं प्रति च समर्पणभावः

७. आन्तरिकनिर्देशनम् - आन्तरिकं स्वातन्त्र्यं बौद्धिकक्रियाङ्कितं कर्म निर्दिशति।



एवमेताः सप्त विशेषताः निर्दिष्टाः सन्ति। आध्यात्मिकबुद्धिसम्पन्नः ससुखं जीवति तदितरान् अपि सुखेन जीवितुमवसरं ददाति। अतः अद्यत्वे गवेषकाः एनां बुद्धिमधिकृत्य संशोधयितुम् आरभन्त। तैः केचन प्रश्नाः अपि एतद्विषये उद्भाविताः सन्ति। ते च यथा -

1. मानवः आध्यात्मिकबुद्धियुक्तः भवति किम्?
2. लिङ्गम् आध्यात्मिकबुद्धिं प्रभावयति किम्?
3. संज्ञानात्मककारकाणि आध्यात्मिकबुद्धिं प्रभावयन्ति किम्?
4. संज्ञानात्मकेतराणि कारकाणि आध्यात्मिकबुद्धिं प्रभावयन्ति किम्?
5. संज्ञानात्मककारकाणि असंज्ञानात्मककारकाणि च आध्यात्मिकबुद्धिं प्रभावयन्ति किम्?
6. शरीरम् - मनः - आत्मा - हृदयम् इत्येतानि आध्यात्मिकबुद्धिं प्रभावयन्ति किम्?

बालस्य विचाराणां भावनानां क्रियाणां च प्रोन्नयनपुरस्सरम् अधिगमानुभवानाम् अवाप्तये पूरकाः पाठ्यक्रमाः आरचनीयाः इति NCERT - 2000 इत्यत्र उक्तमस्ति। एतत्कर्मण्यपि आध्यात्मिकबुद्धेः प्रभावः कियान्? इत्यस्मिन् विषयेऽपि अनुसन्धानस्य आवश्यकता वरीवर्ति।

**उपसंहारः**

भारते आध्यात्मिकबुद्धेः पार्थक्येन अध्ययनं यद्यपि कुत्रापि शब्दशः न कृतं तथापि तस्याः अस्तित्वं सर्वे अभ्युपगच्छन्त्येव। एतद्विषये समधिकं ध्यानमपि भारतीयैः शिक्षाविद्भिः नैव दत्तमस्ति। अतः अधुना मनोवैज्ञानिकदृशा भारतीयज्ञानप्रणाल्याश्रितायाः आध्यात्मिकबुद्धेः विश्लेषणं करणीयम् अस्ति। बुद्धेः विषये तत्प्रकाराणां विषये संस्कृतवाङ्मये यथेष्टं प्रमाणानि उपलभ्यन्ते। तानि आश्रित्य अभिनवशैल्या अनुसन्धानकार्यं विधेयमस्ति। ईदृशेन अनुसन्धानेन प्राप्यपरिणामाः एवं भवन्ति। यथा -

१. आध्यात्मिकबुद्धेः अवगमनं व्याख्या च।
२. आध्यात्मिकबुद्धिं प्रभावयताम् / उत्तेजयतां कारकाणाम् अध्ययनम्।
३. आध्यात्मिकबुद्धिं प्रभावयताम् / उत्तेजयतां कारकाणां विश्लेषणात्मकम् अध्ययनम्।
४. आध्यात्मिकबुद्धिं प्रभावयताम् / उत्तेजयतां कारकाणां संश्लेषणात्मकम् अध्ययनम्।
५. आध्यात्मिकबुद्धेः मूल्याङ्कनविधीनां गवेषणं चेति।

एवं बहुविधानि अनुसन्धानकार्याणि एतद्विषये कर्तुं शक्यन्ते इत्यलं विस्तरेण।

**उद्धृतसन्दर्भसूची -**

---

[i] Five components of spiritual intelligence:

a) ability to utilize spiritual resources to solve problems.

b) ability to enter heightened states of consciousness.

c) Ability to invest everyday experiences.

d) capacity for transcendence of physical and material.

e) Capacity to be virtuous. - Emmons 2000a



[ii] "Spiritual intelligence is exhibited when we live in a way that integrates spirituality into our daily life." - Levin -2000

[iii] "The human capacity to ask ultimate questions about the meaning of life, and to simultaneously experience the seamless connection between each of us and the world in which we live." – Richard Wolman - 2001

[iv] "Spiritual intelligence is concerned with the inner life of mind and spirit and its relationship to being in the world" - Vaughan-2002

[v] "It is the intelligence that makes us whole, that gives us our integrity. It is the soul's intelligence, the intelligence of the deep self. It is the intelligence with which we ask fundamental questions and with which we reframe our answers." - Zahar and Marshall – 1999

## परिशीलितग्रन्थसूची/जालसूची


- Srivastava, Prem. (2016). Spiritual intelligence: An overview. 3. 2349-4182.
- Zohar, D. (2012). Spiritual intelligence: The Ultimate Intelligence. Bloomsbury Publishing.
- Amram Y. The seven dimensions of spiritual intelligence: An Ecumenical, Grounded Theory Paper accepted to the 115th ANNUAL Conference of the APA, San Francisco, 2007. http://www.yosiamram.net/papers/.
- Emmons R. Spirituality and intelligence: Problems and prospects International Journal for the psychology of Religion. 2000b; 10(1):3-26
- Government of India Indian Education Commission Report Government Printing Press, New Delhi, 1964-66, 1967.
- NCERT, National Curriculum Frame- Work for School Education, New Delhi, 2000
- https://www.holy-bhagavad-gita.org/chapter/13
- https://shankaracharya.org/bhaja_govindam.php
- https://www.psychologytoday.com/us/blog/unique-everybody-else/201709/what-is-spiritual-intelligence-anyway
- https://en.wikipedia.org/wiki/Spiritual_intelligence






# वित्तागमधर्म्यव्यवस्था



**डॉ. इतिश्रीमहापात्र**
सहायकाध्यापिका (धर्मशास्त्रविभागः)
केन्द्रीयसंस्कृतविश्वविद्यालयः
एकलव्यपरिसरः, अगरतला , त्रिपुरा
दूरवाणीसङ्ख्या – 8328843709
ई-मेल – itishreeambika@gmail.com

## शोधसारांशः

**मानवजीवने वित्तं व्यवहारमर्यादां नातिशेते । इह कलिकाले वित्तमन्तरेण लोकिकं पारलौकिकं वा सुखमवाप्तुम् असक्यमेव । अतएव नीतिशास्त्रे क्षणशः कणशश्चैव विद्यामर्थञ्च चिन्तयेत् इत्युक्तं वर्त्तते । अतः सर्वैः मनुष्यैः अर्थार्जनीयः स च अर्थः धर्ममनुसृत्य अर्ज्यते तदा एव प्रशस्ततमः । अतः मनुस्मृत्यनुसारेण वित्तागमः धर्मानुसारेण कथं प्राप्तव्यमिति विषये अस्मिन् शोध प्रवन्धे सयुक्तिकं सप्रमाणं च मया निरुपयिष्यते ।**

अनित्ये संसारे वर्त्तमानाः जीवसकलाः स्वजीविकायै जीवनधारणार्थञ्च सततं प्रयत्नशीला सन्ति । प्रयत्नप्रक्रियायामस्यां केचन प्रकृतिद्वारा प्रेरितो भूत्वा स्वजीवनं निर्वाहयन्ति अपरे च प्रकृतिद्वारा प्रेरिते सति स्वबुद्धिबलेनाऽपि वह्वायासेन आत्मनः पराकाष्ठां प्रतिपादयन्ति । उदाहरणं मधुमक्षिकायाः मधुचक्रनिर्माणं प्राक्काले यथाऽऽसीत् तथैव अधुनाऽपि वरिवर्त्ति , परन्तु ऐतिहासिक प्रागैतिहासिकयुगाद्रारभ्य मनुष्य एतावत् पर्यन्तं स्ववुद्धिबलेन आत्मन उत्कर्ष साधयन् वर्त्तते । परिवर्त्तितपरिस्थित्यनुसारेण ये खलु सामञ्जस्यसंस्थापने असमर्थाः वहुभूः ते नष्टं गता, यथा म्यामथ्- प्रभूतयः । तस्मादेव मनुष्य श्रेष्ठप्राणी यः खलु अनुदिनम् उन्नतिपथि अग्रेसरति । तस्मादुच्यते –-



**आहार निद्रा भय मैथुनञ्च सामान्यमेतत्पशुभिर्नराणाम् ।**

**धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ।।**[1]

अर्थात् धर्मकारणादेव पशुमनुष्ययोर्भेदं स्पष्टं भवति । पशवः इन्द्रियबलेन प्रकृतिप्रेरणया च यत्र कर्मसम्पादनं कुर्वन्ति, तत्रैव मनुष्य स्ववुद्धिबलेन कर्माणि सम्पादयति । मनुष्यस्य बुद्धेः विकासक्रमेण आत्मोन्नतिनिमितं च वेदः परमनियामकरूपेण सर्वाग्रे विराजते । स चायं वेदः इष्टप्राप्तये अनिष्टपरिहारयोः अलौकिकमुपायं वेदयन् वर्त्तते । अतः यद्यपि ज्ञानराशेः अमूल्यनिधानरूपोऽयं वेदः सर्वेषां जनसकलानां सांसारिकाणां कृते परमनिःश्रेयसप्राप्तये अनुदितं प्रेरयति तथापि स एव वेद शास्त्रान् अपि पुष्कलीकृत्य तेषामेव माध्यमेन मनुष्यसमाजं शास्ति । शास्त्रेषु एतेषु धर्मशास्त्रं कल्पाङ्गभूतत्वेन सर्वशास्त्राणां ललामभूतत्वेन गुणिगणैः समाकलितत्वेन जीवनस्य कर्त्तव्याकर्त्तव्यबोधकत्वेन मन्वादिभिः ऋषिभिः उपवृंहितत्वेन विराजतेतराम् । तर्हि धर्मप्रतिपादकं शास्त्रं धर्मशास्त्रम् इत्यस्माभिरपि वक्तुं शक्यते । स चायं धर्मः कदाचित् नियमरूपः कदाचित् कर्त्तव्यरूपः अन्यत्र पूजा - दाय - व्यवहार - आचारः - प्रायश्चित्त - आशौच - श्राद्धप्रभृतिभिः अर्थैः बोध्यते ।

श्रुति – स्मृति – सदाचार - आत्मतुष्ट्यादिभिः प्रमाणैः प्रमाणितोऽयं धर्मः सूत्र - स्मृति - भाष्य – निबन्धसाहितैःलोकेषु परिचीयते । "**दौ धृतव्रतौ राजा वहुश्रुतश्च ब्राह्मण**"[2] इत्यनेन गौतमीयश्सूत्रेण पुनश्च "**तयोः चतुर्विधस्य मनुष्यजातस्य अन्तसज्ञानां चलनपतनसर्पणानामायत्तं जीवनम्**[3]" इत्यस्मादपि सूत्रात् न केवलं धर्मः मनुष्यान् रक्षति अपि च चलन – पतन – सर्पणक्षमानां सर्वेषांऽपि जीवानां रक्षकोऽयं धर्म इति बोध्यते । अतः भगवता मनुना स्पष्टमेव प्रतिपादितं यथार्थेन –

**धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।**

**तस्माद् धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ।।**[4]

अतः " धर्माय प्रतिवोध्यताम्" इति वदता भगवान् कृष्णचन्द्रेण अर्जुनः प्रवोधितः यत् – "**स्वधने निधनं श्रेयः परोधर्म भयावह इति** "।[5] अतः धर्मशास्त्रं वर्णादारभ्य साधारणपर्यतान्तस्मार्त्तधर्मान् प्रतिपाद्य तान् अपि त्रिधा विभक्तम् धर्मशास्त्रकारैः । ते यथा – आचारः , व्यवहारः , प्रायश्चितञ्चेति ।

तत्र षड्विधेषु एतेषु स्मार्त्तधर्मषु गुणधर्मप्रसङ्गे उक्तं भगवता मिताक्षराकारेण विज्ञानेस्वरेण यत् – "**शास्त्रीयाभिषेकादिगुणयुक्तस्यय राज्ञः प्रजापरिपालनं परमो धर्मः**"[6] यदि खलु राजा सम्यक् प्रजापरिपालनं कुर्यात् तर्हि न केवलं राज्यस्य अपि च स्वस्यापि श्रीवुद्धिः भवति इति । यतोऽहि उक्तं भगवता मनूना यत् "**राजा षड्भागमादत्ते न धनाद् धर्मादपि**" ।[7] अतस्तावत् राजा एव क्षेत्रप्रस्तुतं करोति राज्यस्य सुपरिचालनायै प्रजानां रक्षणार्थञ्च । अतः जीविकानिर्वाहनिमित्तं वृत्तिप्रदानार्थञ्च राजा एव सर्वान् प्रेरयति यतोहि - न कस्यापि वृत्तेः विलोपः स्यात् नापि निष्कर्मभूत्वा तिष्ठेत् इति उक्तं देवलेन –

---

[1] हितो-1.25

[2] गौ.ध.सू – 1/8/**1**

[3] गौ.ध.सू – 1/8/2

[4] म.स्मृ -8/15

[5] भगवद्गीता- 3/35

[6] या.स्मृ – 1/1

[7] म.स्मृ - 11/23



**ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।**

**वृत्तिं तेऽपि हि काङ्क्षन्ति वृत्तिलोपो विगर्हितः ।।** [8]

पुनश्च प्रजानां रक्षणे राज्ञः वस्तुतः सुखं निहितम् अस्ति तस्मात् चोक्तं मनुना कौटल्येन च –

**" महती देवता ह्येषा नररूपेण तिष्ठति "।**[9]

अपि च कौटल्येन उक्तं वचनं यत् **" प्रजासुखे सुखराज्ञः प्रजानां च हिते हितम्"**[10] इति । सम्प्रति एतस्मात् विचारात् वक्तुं शक्यते यत् राजा एव सर्वाभ्यः प्रजाभ्यः वृत्तिनिर्देशं कुर्यात् । साचेयं वृत्तिः धर्मानुकूला शास्त्रसम्मतायुक्ता विधिनिर्दिष्टा च भवितव्या । यद्यपि ब्राह्मणादिवर्णानां कृते कर्माणि वृत्तयश्च धर्मशास्त्रे उद्गीतानि सन्ति , तथापि सामान्यतया केन प्रकारेण धनोपार्जनं कृत्वा जिवेयुः प्रजासकला इति प्रतिपादयितुं भगवता मनुना साधरणधर्मविषयपरकत्वेन वित्तागमानां धर्म्याणाम् उपायाः उक्ताः – ते च उपायाः यथा -

**सप्त वित्ताऽऽगमा धर्म्या दायो लाभः क्रयो जयः ।**

**प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ।।**[11]

- **दायः -**

दाधातोः घञ्-प्रत्यये कृते दायशब्दो निष्पद्यते । दीयते इति व्युत्पत्या दायशब्दो ददातिप्रयोगश्च यद्यपि सामान्येन बोध्यते , तथापि सर्वत्र दीयमाने द्रव्ये दायपदप्रयोगो न भवति । यदा पित्रादिभिः स्वपुत्रादिभ्य जन्यजनकभावसम्बन्धेन द्रव्यं दीयते तत्रैव दायपदं प्रयुज्यते । किन्तु पित्रादीनां मरणानन्तरं तेषां स्वधनात् स्वत्वेऽपगतेऽपि ,तैरदीयमानमपि तदीयं धनं तत्पुत्रादीनां भवति । अतः ददातिप्रयोगः गौणः । तस्मात् दायशब्देन पितृपितामहादिधनमुच्यते ।

दायस्य भागः दायभागः अथवा दायेन सह भागः दायभाग इति वीक्षायां न कापि व्युत्पत्तिः समीचिना प्रतिभाति । यतोहि दायस्य भाग दायभाग इति स्वीकारे दायस्य विनाशापत्तिः । पुनश्च दायेन सह भागः दायभाग इत्युक्ते दायेन सह विद्यमानोऽपि जनो न ममेदं द्रव्यमपि तु मम भ्रातुरिति प्रयोगदर्शनात् साऽपि व्युत्पत्तिः न समीचिना । तस्मात् दायभागशब्दोऽपि न योगिकः । अतः यत्र पितृपितामहप्रपितामहादिधनं पुत्रपौत्रप्रपौत्रादिभिः विभज्य गृह्यते तत्रैव दायभागपदस्य प्रयोगः क्रियते । तस्माद् दायभागशब्दः पैतृकधनविभाजनेऽर्थे रूढः । तस्य लक्षणं दायभागे नारदवचनत्वेन जीमुतवाहनेनोद्धृतं यथा-

**विभागोऽर्थस्य पित्र्यस्य पुत्रैयत्र प्रकल्प्यते ।**

**दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ।।**[12]

दायशब्देन यद् धनं स्वामीसम्बन्धादेव निमित्तादन्यस्य स्वं भवति तदुच्यते । स च दायः द्विविधः यथा - अप्रतिबन्धः सप्रतिबन्धश्चेति । अप्रतिबन्धस्तु साक्षात् सम्बन्धसत्वे पितामहधनं पुत्राणां पौत्राणाञ्च पुत्रत्वेन पौत्रत्वेन च पितृधनं पितामहधनञ्च स्वं भवतीत्यप्रतिबन्धो दायः । सप्रतिबन्धस्तु साक्षात् सम्बन्धराहिते दूरसम्बन्धसत्वेन पितृव्यभ्रातृणां यद्धनं भवति तदुच्यते । अयं च दायः धनागमोपायेषु अन्यतमः प्रथमश्च । पृथक्

---

[8] दायभागः -1/1

[9] म.स्मृ -7/8

[10] कौ.अ.शा -19/39

[11] म.स्मृ- 10/115

[12] दा.भा.पृ – 1



विवर्धते धर्मः तस्मात् धर्म्या पृथक् क्रिया इति वचनत्वात् । अर्थात् पृथक्करणेन एव सामान्यधने विशेषस्वत्वमापाद्यते तदेव विशेषस्वत्वं दायपदवाच्यः तस्य च धर्म्यधनागमोपायत्वेन स्वीकारो भवति।

➢ **लाभः -**

प्रनष्टस्वामिकस्य निध्यादेः मैत्र्यादिलब्धस्य च लाभः। एतेषु कारणेषु द्रव्यस्वीकर्त्ता स्वामी भवति। तेन प्रनष्टेऽधिगते राज्ञोऽधिगन्तुश्च स्वाम्यनुपपन्नमिति प्रकरणसंगतिः। क्षेत्रेषुत्पन्नानि शस्यादीनि क्षेत्रवदेव क्षेत्रवतः। एतेनाऽऽकरेषूत्पन्नं लवणादि व्याख्यातम्। तानि सर्ववर्णसाधारणानि स्वाम्यकारणानि । तदुक्तं गौतमेन यत्[13] – स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु -

**1 . ब्राह्मणस्याधिकं लब्धम् । (40)**

**2. क्षत्रियस्य विजितम्। (41)**

**3. निर्विष्टं वैश्यशूद्रयोः। ( 42)**

अस्यैव अधिगमस्य लाभत्वेन परिगणना अस्माभिः कर्तुं शक्यते। अधिगमस्य सप्तवित्तागमधर्म्येषु यद्यपि साक्षात् शास्त्रकारेण नोक्तं तथापि व्याख्याबलेन टीकाकर्तृणां च आशयात् साधयितुं शक्यते।

➢ **क्रयः –**

मूल्यविनिमयेन द्रव्य स्वीकारः क्रयः । अत्र क्रये आगमप्रमाणं लेख्यप्रमाणं च प्रमुखे भवतः । तत्र आपणात् विपणीमध्यात् वा कस्माश्चित् जनसकाशात् वा यदि किमपि द्रव्यमिष्यते तर्हि तत्र मुल्यविनिमयः कर्त्तव्य इति सार्वत्रिको नियमः । स चायं नियमो अत्र व्याप्तिः । कदाचित् मूल्यं दातव्यं कदाचित् च न दातव्यमिति अतिव्याप्तिः। कदापि न दातव्यमिति अव्याप्तिः। व्याप्तेः प्रसिद्धित्वात् अतिव्याप्तेः अव्याप्तेश्च दोषसत्वात् नाव्याप्तिः न च अतिव्याप्तिः ग्रहणीये भवतः। यथार्थं मूल्यं दत्वा द्रव्यं स्वीकर्त्तव्यम्। तत्र पुनः द्रव्यस्विकृते सति तत्र दोषसत्वे पुनर्परिवर्त्तनं मूल्यं वा प्रत्यावर्त्तयितव्यम् कालनियमानुसारेण इति धर्मशास्त्रसिद्धान्तः विराजते । अतः सामाजिकव्यवस्थासुसम्पादननिमित्तं क्रयस्य महत्वपूर्णं योगदानमस्ति , स चायं क्रयः सप्तवित्तागमेषु धर्म्येषु प्रतिपादितत्वात्।

➢ **जयः -**

जयधनं विजयत्वेन क्षत्रियस्य धर्म्यः क्षत्रियस्य वर्णधर्म एव प्रजापालनं , राष्ट्ररक्षणं च । राज्ञा चतुवर्णाश्रमाः लोकाः स्वेषु स्वेषु कर्मषु चाभिरताः भूयन्ते। राजा स्वयं वृद्धसंयोगद्वारा विद्याविनीतः स्यात्। राजा एव राज्यं परिचालयेत् । राज्यस्य शासनाङ्गत्वेन सन्धेः विग्रहस्य च महत्वपूर्णभूमिका वर्त्तते । स्वराजस्य रक्षानिमित्तं परराज्यस्य अधिकारनिमित्तं च विग्रहः कर्त्तव्यः , तथैव तेषाम् एव कारणत्वात् सन्धिरपि विधीयते। विग्रहस्तु युद्धपदेनापि अभिधीयते। युद्धं च जयनिमित्तं कर्त्तव्यमिति कारणत्वात् जयेन लब्धं धनं जयधनमिति उच्यते। **"जेता लभेत संग्रामिकं वित्तम्"**[14] इति गौतमीय -सूत्रानुसारेण संग्रामद्वारा लब्धं धनं जेतुरेव। पुनश्च यान – हस्ति- अश्व - वाहनादिकं च राज्ञः भवति । तदितं धनं धर्म्यत्वेन परिगण्यते , तस्य च सप्तवित्तागमेषु अन्यतमत्वेन परिगणितत्वात्।

---

[13] गौ.ध.सू – 2/1/40/41/42

[14] गौ.ध.सू -2/1/20



- **प्रयोगः -**

ऋणादानप्रकरणे उत्तमर्णस्य दानविधिविषयेऽर्थात् सबन्धके धने वर्णानुसारं वृद्धि कियती देया इति विषये वर्णनमऽस्ति यत् –

**अशीतभागो वृद्धिः स्यान्मासि मासि सबन्धके ।**

**वर्णक्रमाच्छतं द्वित्रिचतुष्पञ्चकमन्यथा ॥**[15]

अर्थात् प्रतिमासं सम्बन्धके प्रयोगे प्रयुक्तस्य द्रव्यस्य अशीतितमो भागो वृद्धिर्धर्म्या र्भवति । अन्यथा वन्धकरहिते प्रयोगे वर्णानां ब्राह्मणादीनां क्रमेण द्वि त्रि चतुष्पञ्चकं शतं धर्म्यं भवति । अर्थात् ब्राह्मणे अधमर्णे द्विकं शतम् , क्षत्रिये त्रिकम् , वैश्ये चतुष्कं , शूद्रे पञ्चकं स्यात् । तथा च वृद्धिश्चतुर्विधा इति नारदेनोक्तम् –

**कायिका कालिका चैव कारिता च तथा परा ।**

**चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥**[16]

अर्थात् इयं च वृद्धिर्मासि र्मासि गृह्यते इति कालिका । इच्छाकृता कारिता स्यात् , याऽधमर्णेन स्वयं कृता । कायिका कायकर्मणा , इयमेव वृद्धिर्दिवसगणनया विभज्य प्रतिदिवसं गृह्यमाणा कायिका भवति । वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरित्युच्यते । पुनश्च – कान्तारमरण्यं गच्छन्तीति कान्तारगाः । ये वृद्ध्या धनं गृहीत्वाधिकलाभार्थमतिगहनं प्राणधनविनाशशङ्कास्थानं प्रविशन्ति ते दशकं शतं दद्युः । ये च समुद्राः ते विंशकं शतं मासि मासीत्येवं दद्युः । मूलविनाशस्यापि शङ्कितत्वात् । सर्वे वा ब्राह्मणादयोऽधर्मर्णाः अबन्धके सेयं वृद्धिः धर्मपदवाच्या भवति । तथैव अन्येषु अपि प्रयोगेषु धर्मत्वमप्युपद्यते ।

- **कर्मयोगः/शिल्पादिः –**

शिल्पं नाम अदृष्टकर्मणः उत्पतिः। तत्र अदृष्टं यत् कर्म केनापि कर्त्रा परिदर्श्यते तेन चावाप्यते यद्धनं तदेव शिल्पधनं भवति । यथा- चित्रकरस्य चित्रकरणं तेन प्राप्तं च धनम्,मूर्तिनिर्माणं तेन च प्राप्तं धनम् । भवननिर्माणधनम् इत्यादिः ।

विद्याधनम् – विद्यया प्राप्तं धनं विद्याधनं यथा आचार्येण गुरूणा शिष्यसकाशात् प्राप्तधनम् । प्रवचनेन लब्धं धनम् इत्यादिः ।

- **वेत्तनम् –**

कर्मकराः स्वामीसकाशात् प्राप्तं धनं वेत्तनम् । तस्यैव वेतनस्य अपि कर्मयोगत्वमुपपद्यते ।

सत्प्रतिग्रहः – सज्जनानां सतां दातृणां सकाशेभ्यः लब्धं धनं सत्प्रतिग्रहः भवति । सत्कर्मणा च प्राप्तं धनं प्रतिग्रहं वा सत्पतिग्रहमुच्यते । प्रतिग्रहश्च ब्राह्मणास्य कर्म । प्रतिग्रहेण लब्धे धने ब्राह्मणस्य वृत्तिश्चलति । तत्र –

**"योऽयाज्ययाजनाल्लिप्सेत ब्राह्मणो धनम्"**[17] इति मनुना असत्प्रतिग्रहस्य निषेधः कृतत्वात् ।

अर्थात् अयाज्ययाजनेन लब्धं धनं धर्म्यं न भवति । तस्य कृते दण्डस्य प्रायश्चित्तस्य च निर्देशः दत्तत्वात् । अतः सत्प्रतिग्रहेण लब्धधनं धर्म्यं भवति ।

[15] या.स्मृ - 2/37

[16] या.स्मृ – 2/37/मिता/पृ/194

[17] म.स्मृ – 8/340



एतेषां सप्तवित्तागमानां धर्म्याणां स्वत्वहेतुत्वेन गौतमेन प्रदर्शितम् " स्वामी वैश्यशूद्रयोः'' अस्मिन् एव क्रमे भगवता मनुनाऽपि दशजीवनहेतवुः उक्ताः ते यथा -

**विद्या शिल्पं भृतिः सेवा गोरक्षं विपणिः कृषिः ।**

**धृतिभैक्ष्यं कुसीदं च दशजीवनहेतवः ।।**[18]




## ➢ सहायकग्रन्थसूची -


1. **श्रीमद्भगवतगीता – मुंशीराममनोहरलाल , 1978 ।**
2. **गौतमधर्मसूत्रम् (सूक्ष्माटीकासहित) – नारायणप्रेस ,पुरी- 1991 ।**
3. **याज्ञवल्क्यस्मृतिः– संपा. डा. गङ्गासागरराय, दिल्लीः चौखम्बा संस्कृत प्रतिष्ठान, 2011 ।**
4. **मनुस्मृतिः– संपा. शिवराज आचार्यः कौण्डिन्न्यायनः, वाराणसीः चौखम्बा विद्याभवन, 2010।**
5. **कौटलीयमर्थशास्त्रम्– संपा प्रो. खगेश्वरमिश्रः, पुरीः श्रीसदाशिवपरिसरः, 2018 ।**
6. **कौटिलीय अर्थशास्त्रम्– संपा . वाचस्पति गैरोला, वाराणसीः चौखम्बा विद्याभवन, 2011 ।**
7. **दायभागः – जीमूतवाहनः , मोतिलालवनारसीदासः , दिल्ली , 1982 ।**
8. **हितोपदेशः – व्याख्याकारः-न्यायाचार्य श्रीकृष्णवल्लभाचार्य ।**


[18] म.स्मृ – 10/16






# धर्मरीतिः विदुरनीतिः



**डॉ. चक्रधरमेहेरः**

सहायकाचार्यः

केन्द्रीयसंस्कृतविश्वविद्यालयः, देहली

दूरवाणीसङ्ख्या – 9608591400

ई-मेल – dr.chakradhar.meher@csu.co.in

## शोधसारांशः

**पादाङ्गं सन्धिपर्वाणं स्वरव्यञ्जनभूषणम् ।**
**यमाहुरक्षरं दिव्यं तस्मै वागात्मने नमः॥ महाभारतम् ॥**

**भारतीयसनातनविद्यास्रोतस्सु वैदिकपरम्परानन्तरं लौकिकसामान्यजनानां हितकाम्यया महर्षयः रामायणं महाभारतमिति नाम्ना इतिहासद्वयं व्यरीरचन् । सूर्यवंशचक्रवर्तिनां विशिष्य श्रीरामचन्द्रस्य चरित्रमभिवर्णितं रामायणेतिहासे आदिकविना वाल्मीकिना । तदुत्तरं समस्तलौकिकधर्माणामेकमायतनं महाभारतं चन्द्रवंशचक्रवर्तिनां, तत्रापि कौरवपाण्डवयोः चरित्रमुपजीव्य महर्षिणा कृष्णद्वैपायनेन प्रणीतमस्ति । तादृशमहायशश्शालिनि ग्रन्थेऽस्मिन् उद्योगपर्वान्तर्गते तृतीये प्रजागरपर्वणि महात्मना विदुरेण धृतराष्ट्रं साक्षीकृत्य या च सार्वकालिकी सार्वजनीना च नीतिरुदीरिता, सैव विदुरनीतिनाम्ना लोकेषु विश्रुता ।**



अरण्यवासाज्ञातवासात्मना त्रयोदशवर्षाणि यथानियति व्यतीत्य तीर्णशपथान् पाण्डवान् मेलितुं बान्धवाः वयस्याश्च विराटनगरे समगमन् । तत्सन्दर्भे धर्मपूर्वकराज्यप्राप्तिः पाण्डवानां विना योधनं कथं स्यादिति विचारयत्सु तेषु द्रुपदमहाराजः निजपुरोहितं दौत्यक्रियां निर्वर्तयितुं कौरवान् प्रति व्यसृजत् । कौरवैरपमानिते पुरोहिते प्रत्यागते सति धृतराष्ट्रः पुनः पाण्डवान् प्रति दौत्यवृत्त्या अप्रेषयत्। युद्धे भीष्मादिगुरुनिहत्या राज्यभोगापेक्षया भिक्षावृत्त्या जीवनयापनं श्रेय इति च अवादयत्। दुष्करमभिमानहन्तारमेनं सन्देशमाकर्ण्य श्रीकृष्णः पाण्डवानां राज्यप्राप्तौ धर्मपक्षं समार्थयत् । तेन कौरवाणामेव कुटिलबुद्धिमभिज्ञाय सञ्जयः यदा धृतराष्ट्रं प्राप्नोत् तदा निजपुत्राणां दोषानादर्शयन् वचनानि किञ्चित्कटून्येव व्याहरत् । अवशिष्टं यद्वक्तव्यं तत्सर्वेषामभिमुखमभिधास्यामीत्युक्त्वा निर्जगाम । सञ्जयनिर्गमनानन्तरं किमप्यत्याहितं भविष्यमाशङ्कमानः क्लिष्टमनाः दुर्गतः सन् महात्मानं विदुरं प्रस्तुतकर्तव्यविषये प्रष्टुमाह्वयत् । पश्चात् विदुरागमनोत्तरं यः संवादः उभयोः संवृत्तः तस्मिन् विद्यमानान् कांश्चित् सर्वहितैषिणः विचारानुपादाय यत्किञ्चित् प्रस्तौमि ।

विदुरेण येयमत्र नीतिरुपन्यस्ता सा न केवलं व्यक्तिमात्रावसायिनी अपि तु समग्रं संसारमपि निजरोचिषा समुद्योतयितुमियं शक्ता । कीदृग्जनः कुलेऽस्माकं सम्मतः स्यादित्यस्मिन् विचारे विदुराभिप्रेतमेवमस्ति-

**मा नः कुले वैरकृत्कच्चिदस्तु राजामात्यो मा परस्वापहारी ।**

**मित्रद्रोही नैकृतिकोऽनृती वा पूर्वाशी वा पितृदेवातिथिभ्यः॥**[i]

अत्र कुलं नाम कश्चिन्मानवसमवायात्मा समाज एव ज्ञातव्यः। तस्मिंश्च कुले विद्यमानस्य जनस्य स्वभावोऽयं नैसर्गिकः स्यात् । स जनः इतरैर्वैरं नाचरेत् । यदि स राजा वा मन्त्री वा परधनापहारी न कथञ्चिदपि स्यात् । मित्रेषु हितैषिषु बन्धुजनेषु च न क्वापि द्रोहमाचरेत् । वञ्चकः असत्यवादी च न स्यात्। पितृजनान् ब्राह्मणान् अतिथींश्च अविगणय्य अवमत्य च पूर्वं नाश्नीयात् । श्लोकेऽस्मिन् ये च अवगुणाः समुल्लिखिताः तद्वद्भिर्जनैः समाजः सर्वोऽपि विप्लुतः महोपद्रवग्रस्तश्च ध्रुवं स्यात् । अतो नासौ समाजे वसनीयो जनः, नास्माभिश्च वासानीयः।

सुभाषितकारेणापि ईदृशो दुर्जनः भृशं विगर्हितः –

**अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा ।**

**सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं दुरात्मनाम् ॥**[ii]



लोकव्यवहारे साधारणतया अस्माकं काचिदियं शङ्का बहुशो जायते यत् कीदृशेन जनेन कथमस्मदाभिमुख्यं स्यादिति । तदत्र समाधत्ते महामतिर्विदुरो यथा –

**यस्मिन् यथा वर्तते यो मनुष्यस्तस्मिंस्तथा वर्तितव्यं स धर्मः ।**

**मायाचारो मायया वर्तितव्यः साध्वाचारः साधुना प्रत्युपेयः ॥**[iii]

युद्धेषु वा वाणिज्येषु वा व्यवहारे वा मैत्रीसम्बन्धेषु वा कश्चित्प्रच्छन्नदुर्बुद्धिः अस्मानपकर्तुं किञ्चिद् यतेत । तेन सह तादृशप्रच्छन्नवृत्त्या एव व्यवहारो वरीयान् । यदि निष्कपटी साधुरमायावी सर्वहितैषी साधुरस्माभिः सङ्गतश्चेत् तेन सह तादृशः निर्व्यापन्नव्यवहार एव साधीयानिति आर्याणां धर्मः। अत एव **" शठे शाठ्यं समाचरेत् ", " प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः "** इत्यादिसूक्तयः एतदेव सत्यमुपोद्बलयन्ति ।

वसुधैकपरिवारवादिनामस्मत्पूर्वजानां सङ्कल्पनायां समाजः सर्वोऽपि गृहमेवात्मीयमिति मतम् । तथा विदुरमहात्मनापि अयमेव दृष्टान्तः समाजायोपवर्णितः यथा-

**नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।**

**क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स वरः कविः ॥**[iv]

पञ्च ज्ञानेन्द्रियाणि त्वगादीनि मनो बुद्धिरहङ्कारो स्थूलशरीरञ्च इत्येतन्नवात्मकं बाह्यविषयग्राहकं मार्गं, भवनसंस्थानभूताः स्तम्भा इव शरीरभवनसम्भरणक्षमम् अविद्या कामः कर्म च इत्येतत्त्रयं, एतत्साक्षिणः शब्दस्पर्शरूपरसगन्धांश्च, एतत्कायरूपभवनस्य अधिष्ठातारमात्मानं यः सम्यग् विविच्य जानाति स त्रैकालिको विद्वानित्यामन्यते । एवं रूपकशैल्या समग्रसंसारस्य यदधिष्ठानभूतं तत्त्वरहस्यमभिवर्णयन् विदुराचार्यः अस्मानस्यां दिशि जागरयति यत्सृष्टिनियत्या सर्वथापि समस्तोऽयं प्रपञ्चः नियम्यते ।

सामाजिकान् सर्वानपि सत्ये प्रवर्तयितुमसत्यान्निवर्तयितुं च महामनीषिभिर्वृद्धैः समाजश्रेयो-विधायिभिः अधिष्ठिता सभा किमात्मिका स्यादिति परामृशन् तदानुषङ्गिकविषयविवृतिमपि अतीव सुभगशैल्या विधत्ते विदुराचार्यो यथा –

**न सा सभा यत्र न सन्ति वृद्धाः न ते वृद्धा ये न वदन्ति धर्मम् ।**

**नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनाभ्युपेतम् ॥**[v]

महानुभाविभिः वेदविद्यावरिष्ठैः वृद्धैः यदि सभा न सङ्गता सा न कदापि सभापदव्याहार्या भवितुमर्हति । एवं वृद्धाः धर्मकोविदाः निष्पक्षपातिनः न भवन्ति चेत् तेऽपि वृद्धपदवाच्याः भवितुं नार्हन्ति ।



तथैव सत्येनासङ्गतो धर्मोऽपि धर्मपदव्याहार्यो न स्यात् । सत्यञ्च तद्भवति यत् कापट्यविवर्जितम् । एवं सत्यानुप्राणितधर्मकोविदवृद्धाधिष्ठिता सभैव सभा । ततोऽन्या असभेति विज्ञेया ।

महाभारतं समेषामपि लौकिकानां पारलौकिकानाञ्च शाश्वतसत्यानां निधिरिति विपश्चिन्मतम्। तद्गतानि सर्वाण्यपि पात्राणि मनुष्यजीवनस्य प्रतिकोणं स्पृशन्ति। तत्र चास्मान् चेतयन्ते च । विशिष्य विदुरनीतौ विदुराचार्येण प्रकरणानुरूपतया समाजं दृष्टौ निधाय धार्मिकीं स्थितिमादातुं राजधर्माः साकल्येन अभ्युपवर्णिताः । तैः पृथिवी सर्वथापि राजन्वती स्यादित्याशास्य – **"स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः"** इत्यनया वाचया आत्मानमात्मन्येव सन्निधाप्य विरमीमीति शम् ।

**एकया द्वे विनिर्जित्य त्रींश्चतुर्भिः वशे कुरु ।**
**पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥**



---

[i] भर्तृ.नी.श.- 4.32.

[ii] भर्तृ.नी.श.-41.

[iii] वि.नी.-5.7.

[iv] वि.नी.-1.100.

[v] वि.नी.-3-59.






# भारतीयदर्शनस्याधारभूतसिद्धान्तानुसारं शान्तिशिक्षा



**डॉ. नन्ददुलालमण्डलः**
सहायकाचार्यः, शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, एकलव्यपरिसरः, अगरतला
दूरवाणीसङ्ख्या – 9533608266
ई-मेल - nandadulalmandal38@gmail.com

## शोधसारांशः

जनेषु कर्मणि स्वाभाविकजीवनयापने जीविकादिषु च काठिन्यं वर्तते। अतः मानवेषु शान्तेः ह्रासः जायमानः वर्तते। अतः कोविडरोगात् मुक्तिप्राप्तये जनाः सततप्रायाशशीलाः वर्तन्ते। चिकित्सकाः औषधस्य आनुसन्धानाय प्रयत्नशीलाः सन्ति। मनोवैज्ञानिकाः मानसिकशान्तिप्राप्तये विविधमार्गं अन्वेष्टुं प्रचेष्टां कुर्वन्ति। तद्वत् संस्कृतज्ञाः दार्शनिकाः अपि शास्त्रदृष्ट्या अस्मिन् मानसिकासन्तुलननिवार्य्य शान्तेः मार्गं प्रयच्छन्ति। अतः भारतीयदर्शनस्य मूलभुतसिद्धान्तानुसारं शान्तिशिक्षा महत् उपकुर्युः।

भारतस्य वायु- नदी – रत्नाकर- पर्वतादयः भारतं पवित्रं कर्वन्ति। एवं च सुप्राचीनवैदिककालात् मन्त्रध्वनयः भारतभूमिं शान्तेः शिक्षां यच्छन्तः सन्ति। सत्ययुगात् आरभ्य वर्तमानकालयावत् ज्ञानविज्ञानस्य चर्चा प्रवाहशीला वर्तते। तस्य संरक्षणे विविधेषु युगेषु ऋषयः प्रयत्नं कुर्वन्तः सन्ति। तत्र ते न केवलम् अर्जीतस्य ज्ञानस्य संरक्षणं कर्वन्ति अपि तु नवीनानां तत्त्वानाम् अन्वेषणमपि कुर्वन्ति स्म। अथ च मुनयः आदिदैविकम् आदिभौतिकम् आध्यात्मिकं च शान्तिः प्राप्तये विविधदार्शनिकचिन्तनम् आविष्कारविदधानाः आसन्। एवं च अर्जितस्य ज्ञानस्य संरक्षणेन सह नवीनज्ञानस्य दार्शनिकभावनायाः नवोनवो दिगन्तम् उन्मोचितं वर्तते। तस्य फलस्वरूपं षड् आस्तिकदर्शनानि तथा च त्रयः नास्तिकदर्शनानि विकसितानि सन्ति।



शान्तिशिक्षायाः मूलाधारं वर्तते वेदः। यतोहि वेदोखिलं धर्ममूलमिति। पुनः धर्ममाध्यमेन एव शान्ति आयाति। अतः खलु चतुर्वर्गस्य आदौ धर्म वर्तते। वस्तुतस्तु वैदिकसाहित्यं धर्मद्वारा जगति शान्तिशिक्षां प्रचारं प्रसारं च कुर्वन्ति। तत्र ऋषयः न केवलं मानवानं कृते शान्तिम् इच्छन्ति अपि तु दुर्लोकः भूर्लोकः अन्तरिक्षलोकः आपः औषधिः वनस्पतिः विश्वदेवः ब्रह्म सर्वेषां शान्तिं ईच्छन्ति स्म। अतः मन्त्रे उच्यते-

**"ॐ द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः**

**शान्तिरौषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।।"**

श्रीमद्भगवद्गीतायामपि शान्ति विषये भणितं यत्-

**"नास्ति वुद्धिरयुक्तस्य न चायुक्तस्य भावना।**

**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्।।"** (श्रीमद्भगवद्गीता- 2/66)

एवं क्रमेण वैदिकसाहित्ये शान्तिसूक्तं महाभारते शान्तिपर्वः विविधमन्त्रश्लोकादिषु शान्तिशिक्षायाः आधारः स्थापितो वर्तते। येन मानवः दुःख्येभ्यः मुक्तं भूत्वा अत्मनि मनसि च सच्चिदानन्दस्वरूपम् आनन्दं प्राप्यते।

1. पाश्चात्यशिक्षाशास्त्री डॉ. मर्सी अब्राहममहोदयैः उक्तम्- "शान्तिशिक्षा शान्तप्रियमानवानां कृते भवति येन विश्वे शान्तिप्रियवातावरणस्य निर्मानं भवति।"

2. डॉ. सर्वपल्ली राधा कृष्णनमहोदयानुसारं- शरीरे मस्तिष्के भावनायां च सामञ्जस्य स्थापनमेव शान्तिशिक्षायाः उद्देश्यं, येन व्यक्तिः समाजः समूहः राष्ट्रः विश्व इत्यादयः सुखमयजीवनयापनं कर्तुं शक्नुवन्ति।

इयं शान्तिशिक्षा वसुधैव कुटुम्बकमिति भावनाद्वारा मानवेषु शान्तिस्थापनार्थं प्रेरयति। तत्र तु शान्तिशिक्षायाः अभिप्रायः अहिंसेति। वस्तुतस्तु शान्तिशिक्षायाः उद्देश्यं तावत् व्यक्तीनां ज्ञान- योग्यता- चरित्र- सकारात्मकव्याक्तित्त्वं-धृती-मान्यव्यवहाराणां विकासः इति। आंगले शान्तिः नाम PEACE इति शब्दः उच्यते। अस्य विश्लेषणं तावत् P= Peaceful, E=Environment, A=Among, C=Communities, E= Everywhere.

अर्थात् सर्वेऽस्मिन् जगति समूहेषु शान्तिपूर्णवातावरणस्य निर्माणाय शान्तिशिक्षा अपेक्षते।

भारतीयदर्शनशास्त्रं ब्रह्माण्डे सुक्ष्मविषयात् स्थूलविषयं यावत् सर्वत्र शान्तेः मार्गं विकशितं वर्तते। भारतीयदर्शनेषु अन्यतमं वर्तते सांख्ययोगः। तत्र प्रकृतिपुरूषयोः मेलनेन मुक्तिः अर्थात् शान्तिमाप्नोति। योगदर्शने अष्टाङ्गयोगद्वारा परमशान्तिं प्राप्यते। एवमेव इतरेषु दर्शनग्रन्थेषु शान्तिप्राप्तये शान्तिविषयकशिक्षाः बहव्याः वर्तन्ते। सांख्यदर्शनं प्राचीनार्वाचीनसर्वेषां कृते मान्यता वर्तते। अपरस्मिन् पक्षे योगः भारतीयजीवनपद्धतौ शान्तेः आधारशीला वक्तुं शक्यते। भारतीययोगमाध्यमेन शान्तिशिक्षायाः वार्ता वैदिकावैदिकदर्शनेषु प्रायोगिकरूपेण स्वीक्रितं वर्तते। अन्यदर्शनेषु यथा – न्यायवैशेषिकदर्शने पूर्व-उत्तरमीमांसायां जैनबौद्धचार्वाकादिषु शारीरिकमानसिकसुखप्राप्तये शान्तिशिक्षायाः आधारं स्थापितं वर्तते। ते यथा-

1.सांख्यदार्शनस्याधारभूतसिद्धान्तानुसारं शान्तिशिक्षा-

भारतीयदर्शनेषु सांख्यदर्शनं महर्षिकपिलेण उक्तं पञ्चविंशतिः(25) तत्त्वात्मकं आस्तिकदर्शनम्। सांख्यः शब्दस्यार्थ भवति "सम्यक् ख्यानम्" अर्थात् गम्भीरविचारविश्लेषणम् अथवा ज्ञानस्य शब्दत्त्वेन प्रयुक्तं जातम्। अतः यथार्थज्ञानेन मनसि शान्तिः उदेति। अनादि कालात् अज्ञानवशात् आत्मा अविद्यायां आवृत्तं वर्तते। अनेन सच्चिदानन्दस्वरूपं न अवगत्य जन्ममरणचक्रे पतितं सन् त्रिविधं दुःखं प्राप्यते। अविद्यायाः आवरणं यावत् पर्यन्तं न अपगच्छति तावत् पर्यन्तं मानवाः दुःखेषु प्रतितं भवन्ति एवं च शान्तिः दुरे तिष्ठति। अतः अस्य निवारणेन एव



आत्मज्ञानं आत्मख्याति इत्यादयः प्राप्नुवन्ति। अविद्यायाः निवारणे सति आत्मस्वस्वरूपं ज्ञायते। बुद्धेः उपलब्धिः सांख्यस्य तत्त्वानां सम्यक् ज्ञानेनैव सम्भवति। अतः गीतायाम् उच्यते सर्वं ज्ञानेनैव परिसमाप्यते अर्थात् परमानन्दस्वरूपशान्तिः प्राप्यते। सांख्यस्तु द्वैतमूलकदर्शनं वर्तते। दर्शनेऽस्मिन् ज्ञानविषये परम्पराद्वयं भिन्नरूपेण उपस्थापितं वर्तते। प्रथमस्तु आत्मतत्त्वं तथा च द्वितीयस्तावत् दैवीतत्त्वम्। वस्तुतस्तु अत्र आत्मतत्त्वं रूद्ररूपं मन्यते। अत्र पञ्चतन्मात्रा, पञ्चमहाभूतः, मनः, बुद्धिः, अहंकारः बौद्धिकतत्त्वं च वर्तन्ते। पञ्चमहाभूतैः निर्मितपञ्चभौतिकत्रिगुणात्मकं (सत्य-रज-तम) इन्द्रियाणि स्वभावतः संवेगात्मकं भवति। त्रयविंशतिः तत्तानां ज्ञानं तु मूलप्रकृतिः भवति। यत्र सर्वाधिकं सूक्ष्मतत्त्वं विद्यमानं वर्तते। एतस्मात् विकारः नैव भवति। सांख्ये विवेचितानाम् एतेषां तत्त्वानां ज्ञानेन अर्थात् पुरूषः स्वयं प्रकृतितः भिन्नं ज्ञाने सति कैवल्यस्य सिद्धिः भवति। अतः यदा पुरूषः प्रकृतेः स्वरूपं जानाति तदा त्रिविधदुःखस्य निवारणं भवति। अथ च परमशान्तिः प्राप्यते।

**2.योगदर्शनस्य मूलभुतसिद्धान्तानुसारं शान्तिशिक्षा-**

योगदर्शनस्य प्रवर्तकः महर्षिः पतञ्जलिः दर्शनेऽस्मिन् निष्कामकर्मना कर्मबन्धनात् मुक्तेः उपायः भणितः वर्तते। अतः योगदर्शने कथितं वर्तते यत् योगः चित्तवृत्तेः निरोधः तथा च श्रीमद्भगवद्गीतायां कथितं यत् योगः कर्मसु कोशलम्। वस्तुतोहि योगः नाम जीवात्मना सह परमात्मनः एकीकरणम्, मनसा सह अङ्गस्य योगः, चिन्तनेन सह कार्यस्य योगः इति। उपासनापद्धतिद्वारा चित्तवृत्तिनां नीरोधेन परमात्मनः स्वरूपम् अन्तकरणे प्रकाशितं भवति। वस्तुतोहि तदैव चित्ते आनन्दस्य प्रकाशः एवं च परमशान्तिररूपेण उदेति। अत्र शान्तिप्राप्तेः अष्टाङ्गयोगस्य योगदानमेव मुख्यत्वं भजते। अत्र अष्टाङ्गयोगस्तावत्- यमः, नियमः, आसनम्, प्राणायमः, प्रत्याहारः, धारणा, ध्यानं समाधिः इति। एतेषां माध्यमेन साधकः उच्चतमं स्थानं प्राप्नोति। यमस्य प्रथमे विद्यमानाहिंसा आरभ्य असंप्रज्ञातसमाधिः प्राप्तिमाध्यमेन पञ्चविधक्लेशानां निवारणे सति शान्तिः प्राप्यते। पुनः असंप्रज्ञातसमाधिः सिद्धिद्वारा साधकाः मोक्षं अर्थात् परमानन्दरूपशान्तिं प्राप्नुवन्ति। समाधिविषये व्यासभाष्ये उच्यते- "क्षिणोति क्लेशान्-निरोधाभिमुखं करोति, स सम्प्रज्ञातो योग इत्याख्यायते। सर्ववृत्ति निरोधे त्वसम्प्रज्ञातः समाधिः।"

4.5. **न्यायवैशेषिकदर्शनयोः मुलभूतसिद्धान्तानुसारं शान्तिशिक्षा-**

अन्य भारतीयदर्शनवत् एतयोः उद्देश्यमपि कैवल्यं उत मोक्षः प्राप्तिरेव वर्तते। एतस्य अनुभूतिः षोडसः तत्त्वेषु समाहितं वर्तते। ते तत्त्वस्तावत्- प्रमाणः, प्रमेयः, संशयः, प्रयोजनं, दृष्टान्तः, सिद्धान्तः, अवयवः, तर्कः, निर्णयः, संशयः, जल्पः, वितण्डा, हेत्वामासछलः, जातिः, निग्रहस्थानं च। अस्मिन् दर्शने यथार्थज्ञानं प्रमा इत्युच्यते। न्यायदर्शने प्रत्यक्षस्योपरि गम्भीरविचारं विदधानं वर्तते। अत्र वैशेषिकदर्शणे वर्णीत-द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाश्च। अत्र इन्द्रियार्थसन्निकर्षद्वारा प्राप्तज्ञानं प्रत्यक्षमिति। मनस्तु अणुः उच्यते। मनसः ज्ञानम् अनुमानेनैव भवति। मनस्तु अणुः निरवयवश्च भवत। मनसं वैशेषिकाः नित्यमिति मन्यते। यतोहि इयम् अवयवविहीनं वर्तते। एवमेव सप्तपदार्थानां ज्ञानेन मानसि शान्तिः उदेति।

6.**वेदान्तदर्शनस्य मूलभूतसिद्धान्तानुसारं शान्तिशिक्षा-**

मीमांसा ज्ञानकाण्डः कर्मकाण्डश्च भेदेन द्विधा वर्तते। अत्र ज्ञानकाण्डः वेदान्तः नाम्ना उच्यते। तत्त्वचिन्तनम् अस्य मुख्यं विषयं भवति। वेदान्तदर्शने आत्मचिन्तनस्य जागरणं स्वप्नं, सुसुप्तेः अवस्थाऽपि भवति। अत्र अन्तकरणं चित्तमिति मन्यते। अत्रैव संस्कारं सञ्चितं भवति। अनुभवजन्यसंस्कारात् स्मृतिः भवति। कर्मना पुनः संस्कारम् उदेति। अयं संस्कारक्रमः चक्रवत् चलति। अन्ते कर्मफलात् संस्कारात् मुक्तिः मोक्षं यच्छति। वेदान्ते उक्तं स्थूलसूक्षं, लिंगं, कारणशरीरं तथा प्राणः, बुद्धिः इत्यादीनाम् अध्ययनं भवति। वस्तुतोहि वेदान्तस्य वाणी ब्रह्म सत्यं जगत् मिथ्या इति। भावनाद्वारा संस्कारात् मोक्षः कैवल्यं परमानन्दरूपशान्तिः उदेति।



**7.जैनदर्शनस्य मूलभूतसिद्धान्तानुसारं शान्तिशिक्षा-**

जैनदर्शनेऽपि तत्त्वानां स्वीकृतिः प्राप्ता यस्य चर्चा तु सांख्यदर्शनेऽपि भणितम्। आस्तिकदर्शनवत् जैनमतानुसारमपि मनसः अन्तरिन्द्रियत्वं तथा च क्रोधादिन् कर्म-बन्धनेषु वन्धनकारकं कथितं वर्तते। दर्शनेऽस्मिन् अर्थ-धर्म- काम- मोक्षाणां च चर्चा प्रतिपादिता अस्ति। अस्मिन् दर्शने सृष्टेः मूलतत्त्वानां जीवः अजीवयोः मध्ये विभज्यते। यत्र अन्यदर्शने जीवम् आत्मा इति मन्यते। यत् चेतनं, नित्यं, ज्ञाता, कर्मकरणाय स्वतन्त्रं भवति। अयम् आत्मा सांख्यदर्शनस्य पुरूषेण सह साम्यं रक्षति। अजीवः सांख्यस्य प्रकृतिः सदृशा भवति। द्वयो मेलनमेव वन्धनमिति कथितम्। पुनः जैनदर्शने दृश्यते जीव-अजीवयोः सम्बन्धविनष्टे सति जीवः (पुरूषः) शुद्धः, वुद्धः मुक्तावस्थां प्राप्नोति। अतः एतेषां यथार्थज्ञानेन शान्तिः उदेति। जैनदर्शने शान्तिशिक्षास्तु पञ्चशीलसिद्धान्तोपरि वर्तते। ते यथा – अहिंसा, सत्यं, अपरिग्रहः, अचौर्यः (अस्तेय) तथा च ब्रह्मचर्यः इति। एतेषां यथार्थपलनेनैव शान्तिः उदेति।

**8.बौद्धदर्शनस्य मूलभुतसिद्धान्तानुसारं शान्तिशिक्षा-**

भगवानगौतमबुद्धद्वारा प्रवर्तितबौद्धधर्मः अपि सांख्यदर्शनस्य सिद्धान्तोपरि आधारितं वर्तते। अस्मिन् दर्शने बुद्धत्त्वं प्राप्तिरेव कैवल्यमिति। एतदर्थं समाधिः अपेक्षते। अत्र गमणाय बहुनि साधनानि करणीयानि वर्तते। तत्र अष्टाङ्गमार्गस्य पालनेन समस्तमानवकल्यानाय शान्तिः प्राप्तुं शक्यते। वस्तुतोहि चत्वारः आर्यसत्यस्य ज्ञानं प्राप्य तेषां निवारणम् अष्टाङ्गमार्गद्वारा कर्तुं शक्यते। चत्वारः आर्यसत्यस्तावत् 1. दुःखः संसारे वर्तते, 2. दुःखस्य कारणमस्ति, 3.दुःखस्य निवारणोपायाः सन्ति, 4. निवारणाय अष्टांगिकमार्गाः सन्ति।

प्रथमतः जीवः जन्ममात्रेण विविधदुःखशृङ्खलायां पतितं भवति, अयं दुःखः आर्यसत्यनाम्ना उच्यते। द्वितीयतः संसारस्य विषयं प्रति या तृष्णा सा समुदयः आर्यसत्यं भवति।, यः जीवः तृष्णाभिः सह पञ्चत्वं प्राप्यते सः पूर्वसंस्कारात् पुनः जन्मं लभते। अतः तृष्णां **समुदयः** आर्यसत्यमिति उच्यते। तृतीयतः तृष्णायाः समूलं निवारणं निरोध आर्यसत्यं कथयति। यदि तृष्णा न स्यात् तर्हि दुःखः पुनःजन्मश्च न भवेत्। अस्य प्राप्तिस्तु अष्टांगमार्गद्वारा एव भवति । ते यथा-सम्यक् दृष्टिः, सम्यक् संकल्पं, सम्यक् वचनं, सम्यक् कर्म, सम्यक् आजीविका, सम्यक् व्यायाम्, सम्यक् स्मृतिः, तथा च सम्यक् समाधिः। अनेन आर्यसत्येन परं शान्तिः प्राप्तुं शक्यते।

**9.चार्वाकदर्शनस्य मूलभुतसिद्धान्तानुसारम् शान्तिशिक्षा-**

चार्वाकदर्शनं भोगवादस्योपरि आधारतं वर्तते। भोगविषये तथा च जीवनस्य क्षणस्थायित्वविषये अत्र वदति-

**"यावत् जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिवेत्।**
**भष्मिभूतस्य देहस्य पुनरागमणं कृतः।।"**

वस्तुतस्तु एते दैहिकसुखशान्तिम् इच्छन्ति। अतः एते भौतिकं सुखं प्राप्तुं इच्छन्ति। अयं तु परं शान्तिं न यच्छन्ति।

**उपसंहारः-**

मानवसमाजे एकः सुशृङ्खलः क्रमः प्रचलति स्म। अत्र कारणं तावत् अस्माकं पूर्वजानां प्रचेष्टा अनुसन्धानं त्यागाश्च कारण्भूतः वर्तते। ते ऋषयः त्यागश्च पराकाष्ठाः आसन्। न केवलं त्यागः अपि तु मनवेषु ज्ञानविज्ञानस्य प्रचारप्रसारविदधानाः आसन्। अतः खलु ज्ञानविज्ञानस्य विविधधाराः प्रवाहशीलजाह्ववीवत् बहमानाः वर्तन्तो। एतएव सर्वेऽपि दार्शनिकाः सर्वे भवन्तु सुखिनः इति भावः विकसिता वर्तते। अतः चिन्तनस्य भेदेषु शान्तिप्राप्तेः विविधाः पन्थाः आविष्चक्रुः विविधदर्शनेषु। उपरि वर्णितविविधदर्शनेषु तेषां मुलभुतसिद्धान्तानुसारं ते शान्तिशिक्षा प्राचारिता वर्तन्तो। अतः अधुना आस्तिकनास्तिकदर्शनानां सिद्धान्तं



सम्यक्तया परिशील्य यदि मानवाः आत्मोपलब्धिद्वारा शान्तिं प्राप्तुं शक्नुवन्ति। एवमेव दार्शनिकैः विविधदर्शने शान्तिशिक्षा प्रत्यक्षपरोक्षतया च प्रचारिता।

सन्दर्भग्रन्थसूची-


1. डॉ. राजकुमार रंजन – **"योग शिक्षा एवम् शारीरिक तथा मानसिक स्वास्थ्य"**, एच.पी. भार्गव बुक हाउस 4/230, कचहरी घाट, आगरा- 282004.

2. आचार्य श्री आदित्य योगी- **"ध्यान विज्ञान,"** प्राकाशन योग जीवन धाम ट्रस्ट, ज्वालापुर, हरिद्वार-249404 ( उत्तराखंड)

3. संरक्षक- प्रो.प.ना.शास्त्री, सम्पादक-डॉ.नीलाभ तिवारी,डॉ.नितिन जैन सह-सम्पादक- रजनी वी.जी. मनीष जुगरान - **"वैश्विक परिप्रेक्ष्य में शान्ति और मूल्य शिक्षा,"** शिक्षाशास्त्र विभाग राष्ट्रिय संस्कृत संस्थान मानित विश्वविद्यालय, भोपाल परिसर।

4. आचार्य योगेश शास्त्री एवं डॉ. उदय विद्यालंकार – **समर्पण** वङ्गीय आर्य प्रतिनिधि सभा, महर्षि दयानन्द भवन 42, शङ्कर घोष लेन, कोलकाता-6.







# सदाशिवम्

## संस्कृतशास्त्राणाम् अन्ताराष्ट्रियशोधपत्रिका

(षाण्मासिकी ई-शोधपत्रिका)



ISSUE – Jul-Dec 2022 | Vol. 8 |

ISSN 2582-1326





**SADASHIVAM**

**INTERNATIONAL RESEARCH JOURNAL OF SANSKRIT SHASTRAS**

**(Half-yearly e-Research Journal)**






# चारुचर्यायाः सामाजिकं पौराणिकं च अध्यनम्



**श्री दिलीपकुमारदेवता**
अध्यापकः
कलिङ्ग भारती संस्कृत महाविद्यालयः
बालिचन्दपुरम् , याजपुरम् ,ओडिशा
दूरवाणीसङ्ख्या – 9937125377
ई-मेल – dillipkumardebata68@gmail.com

## शोधसारांशः

**आचार्यमम्मटेन काव्यस्य प्रयोजनानि एवं निर्दिष्टानि सन्ति —**

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**

**सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ।।(काव्यप्रकाशः,१.२)**

**एषु प्रयोजनेषु एकमस्ति कान्तासम्मितोपदेशप्राप्तिः । प्रायशः सर्वेषु काव्येषु लक्षणमिद घटते । परन्तु महाकविना क्षेमेन्द्रेण विरचिते चारुचर्याकाव्ये इदं लक्षणम् अक्षरशः घटते ।चारुचर्याकाव्ये मानवजीवनस्य उपयोगिभूताः कान्तासम्मिताःमधुरोपदेशाः सन्ति।उपदेशैः सह तत्र उपदेशाना समर्थकरूपेण बहूनि पौराणिकोदाहरणानि अपि सूचितानि।अतः चारुचर्याकाव्यस्य सामाजिक पौराणिक च अध्ययनमेवास्य शोधकार्यस्य विषयरूपेण स्वीकृतम् ।**



**मुख्यविन्दवः –**

आचार्य : क्षेमेन्द्र काश्मीरप्रदेशे एकादशशतके अजायत । महाकविः आलंकारिकश्चायम् औचित्यसिद्धान्तस्य प्रतिष्ठापककरूपेण सर्वजनविदितः । अनेन विरचिता चारुचर्या एक मुक्तक-खण्डकाव्यम्। अस्मिन् काव्ये साकल्येन अनुष्टुप् - छन्दसा विरचिताः शतं श्लोकाः सन्ति।

चर-गतौ इति भ्वादिगणीयाद्धातोः गदमदचरयमश्चानुपसर्गे ( ३.१.१०० ) इति सूत्रेण यत्- प्रत्यये कृते तदनन्तरं स्त्रीलिङ्गे अजाद्यतष्टाप् ( ४.९ .४ ) इति सूत्रेण टाप्- प्रत्यये कृते चयो इति पद सिध्यति। चर्यायाः अर्थो भवति स्वभावः आचरणं च। चार्वी चर्या चारुचर्या । अतः चारचर्यायाः अर्थो भवति सुन्दरभावः सुन्दरम् आचरणं च। आचार्यक्षेमेन्द्रस्य इदं चारुचर्याकाव्य चौग्रतम्भा-भारती अकादमीपक्षतः प्रकाशितायाः काव्यमालायाः द्वितीयगुच्छके प्रकाशितमस्ति।

मानवस्य स्वभावम् ,आचरणं , सर्वोपरि जीवनं च शास्त्रानुकूलं कर्तुमत्र काव्ये विविधैः पौराणिकै उदाहरणै: सह उपदेशा: प्रदत्ताः सन्ति। तेषु कानिचिद् उदाहरणानि अत्र प्रदीयन्ते।

श्रीब्यासदासः क्षेमेन्द्रकविः समासेन विचार्य सतां सम्मतां श्रव्याम् इमां चारुचर्यां नाम उपदेशावलीसम्बलितां कवितां रचितवान्। महाकवेः क्षेमेन्द्रस्य रचना अतीव मधुरा , कोमला च। तस्य काव्यविन्यासः , सुदुढः । असौ कविः वहन्ग्रन्थान् अतीव गभीरार्थापूर्णार विरचितवान् । ग्रन्थरचना वैपुल्यात् असौ महर्षिब्यासादेवं बिहाय इतरेभ्यः सर्वाग्रगण्यत्वेन प्रसिद्धः । ततोऽयं आत्मानं महर्षिब्यासत्वेन स्वीकरोति। तस्य सकलाः रचनाः पाठकानां श्रवणयोग्याः भवन्ति। " चारुचर्या " पुस्तकस्यारम्भे कविः ग्रन्थस्य निर्विघ्नपरिसमाप्तिकामः भगवतः श्रीकृष्णस्य नामोल्लेखमकरोत्। सर्वतोभावेन ग्रन्थस्य प्रतिश्लोकं परोक्षे समाजं उपदेशप्रदानार्थं प्रयत्नमकरोत्।उपदेशौः सह तत्र उपदेशानां समर्थकरूपेण बहूनि पौराणिकोदाहरणानि अपि सूचितानि। कानिचन यथा -

**ब्राह्मे मुहूर्ते पुरुषस्त्यजेन्निद्रामतन्दितः**
**प्रातः प्रवुद्धं कमलमाश्रयेच्छ्रीर्गुणाश्रया ॥**[1]

प्रभाते सूर्योदये विकासितं कमलं यथा श्रीः (शोभा ) आश्रयते ,तथैव जनः ब्राह्मोमुहूर्ते निन्दां परित्यजेत् । ततः स्नानानन्तरं पुण्यपूतशरीरः स्यात् । महेश्वरमनभ्यर्च्य काञ्चित् क्रियां न कुर्यात् । नरः शास्त्रोक्तविधिना श्रद्धावान् सन् श्राद्धादिक्रियां कुर्यात् । शयनकाले कदापि स्वशिरः उत्तरस्यां प्रतीच्यां वा न कुर्यात्। कयाचित् शय्याविपर्ययात् शक्रेण दितेः गर्भः पातितः। गृहस्थजनः अर्थिभुक्तावशिष्टं अन्नं भक्षयेत्। श्वेतस्य अर्थिरहितं भुक्त्वा निजमांसाशनोऽभवत् सम्यगरूपेण हस्तपादौप्रक्षाल्य जप-होम-पूजनविधीन् च कुर्यात् । यतः पदशौचविहीनं नलं कलिः प्रविवेश । निशायां सर्वेषु सुप्तेषु एकाकी भ्रमणशीलः न भवेत्। यतः चौरशङ्कया माण्डव्यरूषिः शूललीनोऽभूत्। विवेकी जनः कदापि परस्त्रीषु आसक्तः न भवेत् एतेन महत्पातकं स्यात्।

---

[1] चारुचर्या(काव्यमाला)०2,पृ० 128



**न मद्यव्यसनी क्षेबः कुर्याद्वेतालचेष्टितम्**
**वृष्णियों हि ययुः क्षीबास्तृणप्रहरणाः क्षयम् ।।**[2]

मद्यपानरूपम् अभ्यासं कदापि न कुर्यात् । मद्यपानकारणादेव यदुवंशस्य ध्वसो बभूव। क्षमा एव संपदां मूलं भवति। जनमेजयः ईर्षादोषात् विप्रशापमवाप। क्लेशदशामापन्नोऽपि धर्म मर्यादां न त्यजेत। धर्मार्थी हरिश्चन्द्रः चण्डालसेहे दासतामवाप। धीमान् जनः सत्यव्रतभङ्गेन कार्यं न प्रसाधयेत्। धर्मराजः युधिष्ठिरः सत्यभङ्गात् नरकक्लेशं दृष्टवान्। जनः सर्वदा सद्भिः सह सम्पर्क कुर्यात्। विभीषणः रामेण सह सङ्गत्या प्रचुरं लङ्काराज्यं प्राप्तवान्। सर्वदा पितरि मातरि च भक्तिं कुर्यात्। यतः मातृशापेन सर्पसत्रे नागानां क्षयः अभूत्। "स्वर्गात् उच्चतरः पिता " इति न्यायेन सर्वदा पितुः इप्सिता साधयेत्। ययातिः स्वपुत्रात् यौवनावस्थाम् अगृह्णात्। पश्चात्तापेन दूषितः न भूत्वा यथाशक्ति दानं कुर्यात्। महाराजः बलिः आत्मना अर्पितस्य अवशेषदानस्य शुद्धये वधः अभूत्।

**दानं सत्त्वमितं दद्यान्न पश्चात्तापदूषितम्**
**बलिनात्मार्पितो वन्धे दानशेषस्य शुद्धये ।।**[3]

जनः प्रत्युपकारस्पृहां विहाय सत्विकभावेन दानं दद्यात्। महावीरः कर्णः आत्मनः शक्तिं काम्यमाणः कलुषितः अभूत्। कदापि ब्राह्मणानाम् अवमाननं न कुर्यात्। ब्रह्मशापात् महाराजः परीक्षितः तक्षकाग्नौ क्षयः अभवत्।

अभ्यन्तरनिष्फलं दम्भारम्भम् उद्धतकार्यं न कुर्यात्। महावीरः कर्णः आत्मानं " ब्राह्मणः " इति परिचयेन अयत्नकृता शस्त्रविधा निष्फला अभूत्। अयोग्यजनसेवया प्राप्तेषु दैवाधीनेषु मनोनिवेशं न कुर्यात्। यतः भीष्मद्रोणादयः दुर्मतिं दुर्योधनं समाश्रित्य विनष्ठाः अभूवन्। जगति अन्यस्य प्राणरक्षार्थं सर्वदा दयापरायणः भवेत्। महाराजः शिविः शरणागतकपोतस्य रक्षाणाय स्वस्यशरीरमांसमददात्। आत्मनः कुसुमकोमलं मनः सर्वदा अद्वेषपेशलं कुर्यात्।

द्वेषदोषेण देवदानवसंक्षयः अभूत्। सर्वदा उपकारिणः प्रत्युपकारं कुर्यात्। कदापि कृतघ्नतां न कुर्यात्। गौतमविप्रः उपकारिणं नाडीजङ्घं हतवान्। वुद्धिमान् जनः सातिशयं अनुरागेण वशीभूतः सन् आत्मनः स्त्रियाः अधीनः न भवेत्। पत्न्याधीनः महाराजः दशरथः पुत्रशोकेन प्राणान् तत्याज। आत्मप्रशंसा अथवा स्वस्य गुणराशिं वर्णयन् दुखराशिं न प्राप्नुयात्। यतः महाराजः ययातिः स्वस्यगुणराशिं स्मृत्वा स्वर्गात् च्युतः अभवत्। हिंसया सातिशयं पीड़ादायकं मृगाभिलाषं त्यजेत्। पाण्डोः ऋषेः अभिशापात् स्वतनुमत्यजत्। सातिशयं निष्ठुराणां हृदयदाहकानां तीक्ष्णवाक्यशराणां प्रयोगः न कर्त्तव्यः। भीमः दुःशासनस्य निष्ठुरवचनेन क्रोधाकुलितः सन् कौरववंशध्वसार्थं प्रतिज्ञातवान्। अन्यस्य क्लेशदायकं प्रभोः प्रियकपटाचरणं न कुर्यात्। यतः सूर्यचन्द्रमसौ कपटतायाः हेतोः राहोः भक्षणीयतां प्राप्तौ।

**कुर्यान्नीचजनाभ्यस्तां न याच्ञां मानहारिणीम्**
**बलियाच्ञापरः प्राप लाघवं पुरुषोत्तमः ।।**[4]

---

[2] 2.तत्रैव,11,पृ॰ 129
[3] चारुचर्या(काव्यमाला) 18,पृ॰ 130
[4] तत्रैव,॰31,पृ॰ 131



नीचजनपक्षे सम्मानहानी प्रार्थनां न कुर्यात्। भगवान् वामनः महाराजं वलिं त्रिपादभूमिं याचमानः लघुत्वं प्राप्तवान्। बन्धुसम्बन्धियं जनं न दूषयेत्। यतः दक्षप्रजापतिः स्वस्य जामातुः शिवस्यापमानात् तस्य यज्ञः विनष्टः अभूत्। सज्जनः कदाचिदपि हृदयविदारकं कार्यं न कुर्यात्। भगवान् शङ्करः निन्दितकर्म कर्त्तुमिच्छतः ब्रह्मणः मुखकमलम् अच्छिन्नत्। विवादे गर्वान्धः भूत्वा अपरस्य क्रोधस्य कारणं न भवेत्। वचनस्य कठोरताहेतोः भगवान् श्रीकृष्णः शिशुपालस्य शिरः अच्छिन्नत्। गुणगणस्तुत्या महतां जनानां सम्मानवृद्धिं कारयेत्। स्तुत्या एव हनुमान् समुद्रपथेन लङ्कानगरीम् अगच्छत्। तत्ववित् जनः गुणानेव आदरं कुर्यात्। द्रोणपुत्रः अश्वत्थामा द्विजः सन् निष्ठुरस्वभावः आसीत् । परन्तु शूद्रवंशे जातोऽपि विदुरः क्षमाशीलः तथा परदुःखकातरश्चासीत्। बुद्धिमान् जनः सातिशयं अर्थप्रार्थनया अपरम् उद्वेजयितुं न चेष्टेत। देवगणाः अमृतं प्राप्तुम् अब्धिमन्थने तत्परः अभूवन्। सतिशयं निष्ठुरः लुब्धः तथा कुटिलस्वभावः जनः सर्वदा अन्यं प्रति इर्षापरायणः भवति। यतः निमन्त्रितः महाराजः विश्वामित्रः गुरोः वशिष्ठस्य कामधेनुम् अपहर्त्तुमचेष्टत। " तीव्रे तपसि लीनानामिन्दियाणां न विश्वसेत् "। यतः तपानोविष्टः ऋषिः विश्वामित्रोऽपि उत्कण्ठितः सन् अप्सरसं मेनकां स्वकण्ठे आलिलिङ्ग।

**कुर्याद्वियोगदुःखेषु धैर्यमुत्सृज्य दीनताम्**
**अश्वत्थामवधं श्रुत्वा द्रोणो गतघृतिर्हतः ।।**[5]

वियोगदुःखेषु धैर्यं धारयन् नम्रताम् आचरेत्। यतः पुत्रस्याश्वत्थाम्नः मृत्युसम्बादं विज्ञाय धैर्यहीनः द्रोणाचार्यः पाण्डवैः हतः। बुद्धिमान् जनः क्रोधराक्षसस्याधीनतां न स्वीकुर्यात्। यतः वीरभीमसेनः राक्षसवत् दुःशासनस्य उरःस्थितं रुधिरम् अपिवत्। स्वस्य प्रभोः सन्तोषाय आत्मनः विनाशविषये अभिनिवेशं न कुर्यात्। बाणसुरः आत्मनः विनाशाय उद्धतसंग्रामं प्रार्थितवान्। विद्याभिलाषी उद्वेगशून्यः सन् सेवया एव गुरुं सन्तोषयेत्। कचः इति शिष्यः गुरुसेवापरायणः भूत्वा स्वस्य शरीरक्लेशरूपाम् अवस्थां प्राप्तवान्। भक्तिपरायणा, पतिहितरता, निरपराधिनी जानकी परित्यक्ता न भवेत्। परन्तु प्रजानुरञ्जकः श्रीरामः लोकापवादभयात् तां परित्यज्य शोकशूलघातेन दग्धः अभूत्। यशःशरीरेण जीवितस्य जनस्य जीवनीं स्मृत्वा पुनश्च तस्य ख्यातिं रक्षेत्। यतः महाराजः इन्द्रद्युम्नः स्वर्गगामी भवन्नपि जनेषु तस्य कीर्त्तिस्मरसु सः पुनः पृथिवीं प्रत्यागतः । शीघ्रगामिनीं चञ्चलां श्रियं कदर्यतया न रक्षेत्। यतः नन्दराजस्य लक्ष्मीः व्याडिन्द्रदत्ताभ्यां युक्त्या अपहृता। मनुष्यः आत्मनः शक्तिक्षीणः सन् अन्यमपि क्षमेत्। अपिच स्वयं शक्तिहीनं सामर्थ्यवन्तं जनं नाक्षिपेत्। कार्त्तवीर्यः स्वयं क्रोधाकुलितः सन् रावणं वबन्ध। कपटतापूर्णानां वेश्यानां वचसि न विश्वसेत्। यतः निःशङ्कः ऋषिः ऋष्यशृङ्गः जरतानाम्न्या वेश्यया शृङ्गारप्रियः अभूत्।

स्वयं बलगर्वितः सन्नपि क्षुद्रं शत्रुं नावमन्येत। रामचन्द्रः आक्रमणाय उद्यान पर्शुरामं ब्राह्मण इति मन्यमानः त्यक्तवान्। जगति अन्यं वृथा पीडयन् जनः चिरं न जीवति। यतः संसारस्य रिपुस्वरूपः वीरः जरासन्धः अपि भीमेन विदीर्णः अभूत्।

**औचित्यप्रच्युताचारो युक्तियां स्वार्थं न साधयेत्**
**व्याजवालिवधेनैव रामकीर्तिः कलङ्किता ।।**[6]

---

[5] चारुचर्या(काव्यमाला)०40,पृ० 132



उचितप्रत्युपकारयुक्त्या स्वार्थसाधनं न कुर्यात्। यतः व्याजबालिवधेन रामस्य कीर्त्तिः कलङ्किता अभवत्। जितेन्द्रियजनः अकार्याचरणशीलां स्वस्य जननीमपि निर्जनवने त्यजेत्। पुत्ररूपेण गृहीतमपि शम्वरासुरपत्नी मायावती कामातुरा सती प्रद्युम्नं मैथुनकामनाम् अकरोत्। कठोरतपोनिरतं जनं धैर्यविच्युतं न कुर्यात्। यतः देवानाम् अनुरोधेन पुष्पबाणप्रयोगं कुर्वन्तं कामदेवं भगवान् त्रिलोचनः नेत्राग्निना पतङ्गवत् अदहत्। नित्यं कलहाक्रान्तं कपटपूर्णं न कुर्यात्। यतः शक्तिप्रयोगं कुर्वन्तं रुक्मं हलधरः फलकदुर्घातेन निहतवान्। स्वप्नेऽपि प्रभो अनुग्रहे सत्यप्रत्ययं न कुर्यात्।

समान्यकथया महाराजः योगानन्दः मन्त्रिशकटालं अन्धकूपमध्ये निक्षिप्तवान्। लोकायत्तवचने नास्तिकस्वभावेन स्वस्य बुद्धिं न विनियोजियेत्। भगवान् नृसिंहः स्तम्भात् निर्गतः सन् हिरण्यकशिपुं जघान। अत्युन्नतपदारुढः सन् पूज्यान् नैव अवमानयेत्। महाराजः नहुषः देवराजपदं प्राप्नोऽपि ऋषेः अगस्त्यवमाननात् स्वर्गात् च्युतः अभवत्। रिपुणा सह सन्धिं विधाय निःशङ्कः नैव सुखी भवेत्। इन्द्रः निःशङ्कमानसः सन् सन्धिं कृत्वा वृत्रासुरम् अवधीत्। हितोपदेशं निशम्य यथोचितं कार्यं कुर्यात्। कौरवेश्वरः धृतराष्ट्रः विदुरोक्तमकृत्वा शोकाकुलितः अभवन्। रोगी वह्वन्नभोजनलोभेन मन्दरुचिः भवति। यतः प्रचुर यज्ञहविः भक्षणेन अग्निरपि जाड्यम् अजायत, यत्नेन आत्मनः दोषान् मार्जयेत्। परन्तु कठिनतपोव्रतेन शरीरस्य क्षयं न कुर्यात्। यतः रावणानुजः कुम्भकर्णः तपस्या प्रत्यहं निद्रया अचेतनः अभूत्

**स्थिरताशां न बध्नीयाद्भुवि भावेषु भाविषु**
**रामो रघुः शिबिः पाण्डुः क्व गतास्ते नराधिपाः ।।[7]**

अस्मिन् नष्टशीले संसारे स्थिरतायाः अभिलाषं न कुर्यात्, यतः रामः रघुः शिविः पाण्डुः चादयः नराधिपाः परलोकं गताः। वृद्धानां वाक्यं कर्म वपुः क्रियाः न विडम्वयेत्। श्रीसुतः मुनेः विडम्वयन् वैरूप्यं तनुः प्राप्तवान्। दीर्घकालं वाप्य मनसि कठोरमनोव्यथां न धारयेत्। यतः अपमानितः चाणक्यः सप्तभिः दिवसैः नन्दराजानम् अवधीत्। सतीनारीणां तपसा प्रज्वलितं क्रोधानन्दं न वर्द्धयेत्। यतः वेदवती दशकण्ठरावणस्य विनाशाय स्वतनुः अत्यजत्। विद्याविनयगुणान्वितं गुरुं भक्त्या सेवेत। यतः सन्तुष्टः ऋषिः विश्वामित्रः रामाय अस्त्रसकलानि प्रायच्छत्। स्वयमेव अन्यस्मै धनं दद्यात्। बलात् अपरस्य धनमपहृत्य अन्यस्मै न दद्यात्। आचार्यद्रोणः प्रियशिष्येण अर्जुनेन द्रुपदं वन्दीकृत्य अपह्ववीराज्य विनिमयेन तो त्यक्तवान्। परस्परं विरूद्धहीनान् धर्मार्थकाममोक्षान् साधयेत्। सगरादयः धर्मार्थकामान् त्रिवर्गान् साधयन्तः प्रजारञ्जनम् अकुर्वन्। स्ववंशे न्यूनतां, तुल्यताम् अधिक्यं वा न इच्छेत्। उत्कर्षेऽपि रघुवंशे रामचन्द्रः स्वकुलाधिकः अभूत्। तीर्थानां जलेषु सर्वदा आत्मानं पवित्रं कुर्यात्। पाण्डवादयः लोमषादीनाम् अभिलषितेषु तीर्थेषु स्नानतर्पणादिन् संपाद्य कृतार्थाः बभूवुः। आपद्काले अप्युक्तासु कलासु कृतश्रमः स्यात्। राज्ये जनकराजः अम्भसि निर्लेपो पद्मपत्रवत् अभूत्। लोभवशतः आशिष्यसेवया लाभः गुरुः लघुर्वा भवेत्। देवगुरुः वृहस्पतिः संवर्तयज्ञप्रार्थनया लज्जामलभत।

**नष्टशीलां त्यजेन्नारीं रागवृद्धिविधायिनीम्**
**चन्द्रोच्छिष्टाधिकप्रीत्यै पत्नीं निन्द्याप्यभूद्गुरोः।।[8]**

---

[6] तत्रैव ॰51,पृ॰ 133

[7] चारुचर्या(काव्यमाला)॰62,पृ॰ 134



रागवृद्धिविधायिनीम् , नष्टशीलां नारीं त्यजेत्। वृहस्पतेः चन्द्रोच्छिष्टप्रीत्यै पत्नीनिन्दापि अभूत्। गीतवाद्यादिभिः अतिविलासव्यसनी न भवेत्। वीणावादननिपुणः वत्सराजः उदयनः शत्रुणा हृतः। कुसुमकोमलाः रामाः तैक्ष्ण्येन न उद्वेजयेत्। यतः सूर्यदेवः भार्याभयोच्छित्यै स्वस्य तेजः अशोचयत्। आत्मनः कोषं पद्मवत् धूर्त्तभ्रमरभोज्यतां न नयेत्। पुरा अम्बुधिः सुरैः क्रमेण मन्थनात् नीतार्थः सन् श्रीहीनः अभूत्। भग्नकुम्भानिभं प्राप्तम् उपदेशामृतं न त्यजेत्। अर्जुनः सासूय विस्मृतगीतार्थः कलहे रतः अभूत्। आर्यैः कदाचन पुत्रायत्तम् ऐश्वर्यं न कार्यम् ,अन्धराजः धृतराष्ट्रः पुत्रर्पितः प्रभुत्वः सन् तृणोपमम् अभूत्। शत्रुशेषदूष्याणां स्कन्धे कार्यं न समर्पयेत्। शल्यतेजोवधार्द्धितः कर्णः निष्प्रताप अभवत्। प्रभुसम्माने लब्धे फलक्लेशं न समाश्रयेत्। ईश्वरेण क्षीण एव क्षपापतिः मूर्ध्नि धृतः। साधुजनसेवितम् श्रुतिस्मृत्युक्वम् आधारं न परित्यजेत्। सत्यधर्मच्युतात्मानां दैत्यानां श्रीवियोगः अभूत्। पलायिन्याः श्रियः बन्धाय गुणग्रहणं कुर्यात्। श्रिया निर्गुणान् दैत्यान् विहाय सगुणाः देवाः आश्रिताः। पदाग्निं गां गुरुं देवं च अछिष्टः सन् द्रुतं न स्पृशेत्। यतः उच्चिष्टसर्पिषाम् दानवानां श्रीः विनष्टा। प्रतिलोमविवाहेषु अतः आत्मनः उन्नतिस्पृहां न कुर्यात्। ययातिः शुक्रकन्यायां सस्पृहो म्लेच्छतां गतः। रूपार्थं कुलाविधाविहीनं जनं न अपहसेत्। वानरराजः नन्दी हसन्तं दशाननम् अशपत्। बन्धूनां वैरं वारयेत्। न च एकपक्षाश्रयो भवेत्। कुरुपाण्डवसंग्रामे हलधरः न युयुधे। धनधान् जनः संसारसारं परोपकारं कुर्यात्। भगवान् बुद्धः संसारस्य सर्वसत्वोवृत्तौ धियं विदधे। अधनं बन्धुं विभृयाम्। दुर्गतं मित्रं त्रायेत। अर्थिकल्पद्रुमः बलिः बन्धुमित्रोपजीव्यः अभूत्। अभिचारोग्रवध्यादिकुहकाः क्रियाः न कुर्यात्। कृत्याद्यभिचारमयः इन्द्रजित् लक्ष्मणेन हतः। गृहस्थः क्रमात् ब्रह्मचारी वानप्रस्थो यतिः स्यात्। ययातिप्रमुखाः नृपाः आश्रमात् आश्रमं याताः।

**कुर्याद्व्ययं स्वहस्तेन प्रभूतधनसंपदाम्**
**अगस्त्यभुक्ते वातापौ कोषस्यान्यैः कृतो व्ययः ।।**[9]

स्वहस्तेन प्रभूतधनसम्पदां व्ययं कुर्यात्। अगस्त्यः भुंक्ते वातापौ अन्यैः कोषस्य व्ययः कृतः। जन्मावधि तत् न कुर्यात्। यत् अन्ते सन्तापकारि भवति। एकशिरं शेषः दशाननः सीताक्लेशं सम्भार। जराशुभ्रेषु केशेषु तपोवनरुचिः, भवेत्। धीराः कुरुपुर्वाः महीभुजः अन्ते वनं ययुः वयःक्षये पुनर्जन्मजराच्छेदकोविदः स्यात्। विदुरेण ज्ञानानले पुनर्जन्मवीजं हुतम्।

**परमात्मानमन्तेऽन्तर्ज्योतिः पश्येत्सनातनम्**
**तत्प्रात्या योगिनो जाताः शुकशान्तनवादयः।।**[10]

अन्ते सनातनं परमात्मानं अन्तर्ज्योतिः पश्येत्। तत् प्राप्त्या शुकशान्तनवादयः योगिनः जाताः। प्राप्तधीरजीवेऽपि सुकृतसन्ततिजीवेत्। मान्धातृमुख्याः यशोमयैः कायैः अद्यापि जीवन्ति। तेषां सन्तोषदम् आपदां हन्तारं विष्णुं स्मरेत्। पितामहः भीष्मः शरतल्पगतः सन् गरुडध्वजं विष्णुम् अस्मरत्।

[8] चारुचर्या(काव्यमाला)75,पृ० 135

[9] तत्रैव,93 ,पृ० 137

[10] तत्रैव,97 ,पृ० 137



## आधारपुस्तकानि -


1. दुर्गाप्रसाद , परव , काशीनाथपाड्गुरङ्ग च ( सं ) , चारुचया , काव्यमाला ( द्वितीय गुच्छक),चौखम्भा भारती अकादमी , वाराणसी , १ ९ ८७ .
2. Chakraborty, Uma , Ksemendra ,Sri Sat Guru Publication . Delhi . 1991.
3. Kane , P.V. ,History Of Sanskrit Poetics , Motilal Banarsidass , Delhi , 1987.
4. Narasimhaiah,C.D., East and West Poetics at Work , Sahitya Akademi , New Delhi,1994.
5. Puspendra Kumar , Aesthetics and Sanskrit Literature . Nag Publishers Delhi.1980
6. गोयल , प्रीतिप्रभा , संस्कृत काव्यशास्त्र एवं काव्याङ्ग , अरिहन्तप्रकाशन , जोधपुर , २०१ ९ .
7. Thakur , Prabhat Singh . Index of Ph.D. Thesis in Sanskrit , New Bharatiya Book Corporation . Delhi . 2011 .


